$$\text{ज्या}^{2}(\text{मध्यचा}\tfrac{1}{2}) = \frac{\text{२त्रि}^{2}+\text{२ज्याअ ज्याद्वि}\,\text{२कोज्याअ कोज्याद्वि}}{४} = \frac{\text{त्रि}^{2}+\text{ज्याअ ज्याद्वि कोज्याअ कोज्याद्वि}}{२}$$

अय हि कोटिज्याघातोन–ज्याघातयुत–त्रिज्यावर्गरूपभाज्यस्य दलरूप ।
अस्य मूलमैक्यचापार्धस्य ज्येति । अस्याश्चैक्यचापोत्क्रमज्यात्रिज्या-
घातदलमूलरूपत्वेन निश्चयाद्भाज्य एव ज्ञात ।

त्रिज्योत्क्रमज्याघातरूपोऽयम् । $= \text{त्रि}^{2}+\text{ज्याअ}\times\text{ज्याद्वि}-\text{कोज्याअ}\times\text{कोज्याद्वि}$

त्रिज्याभक्तो जात ऐक्यचापोत्क्रमज्यारूप $= \dfrac{\text{त्रि}^{2}+\text{ज्याअ}\times\text{ज्याद्वि}-\text{कोज्याअ}\times\text{कोज्याद्वि}}{\text{त्रि}}$

त्रिज्यात शुद्धो जात ऐक्यचापकोटिज्यारूप $= \dfrac{\text{कोज्याअ कोज्याद्वि}-\text{ज्याअ ज्याद्वि}}{\text{त्रि}}$

अस्य वर्ग $= \dfrac{\text{कोज्या}^{2}\text{अ कोज्या}^{2}\text{द्वि}-\text{२कोज्याअ कोज्याद्वि ज्याअ ज्याद्वि}+\text{ज्या}^{2}\text{अ}\times\text{ज्या}^{2}\text{द्वि}}{\text{त्रि}^{2}}$

त्रिज्यावर्गाच्छुद्ध ऐक्यचापज्यावर्ग =

$= \dfrac{\text{त्रि}^{४}-\text{कोज्या}^{2}\text{अ कोज्या}^{2}\text{द्वि}+\text{२ कोज्याअ कोज्याद्वि ज्याअ ज्याद्वि}-\text{ज्या}^{2}\text{अ}\times\text{ज्या}^{2}\text{द्वि}}{\text{त्रि}^{2}}$

अत्र भाज्ये चत्वारि खण्डानि । तत्र चतुर्थं त्रिज्यावर्गवर्गात्मक खण्ड-
मन्यथा साध्यते ।

आद्यभुजज्याकोटिज्यावर्गयोगो हि एकस्त्रिज्यावर्ग $= \text{ज्या}^{2}\text{अ}+\text{कोज्या}^{2}\text{अ}$,

द्वितीयभुजज्याकोटिज्यावर्गयोगो हि द्वितीय $= \text{ज्या}^{2}\text{द्वि}+\text{कोज्या}^{2}\text{द्वि}$,

अनयोर्घातस्त्रिज्यावर्गवर्ग =

$\text{ज्या}^{2}\text{अ ज्या}^{2}\text{द्वि}+\text{ज्या}^{2}\text{द्वि कोज्या}^{2}\text{अ}+\text{कोज्या}^{2}\text{द्वि ज्या}^{2}\text{अ}+\text{कोज्या}^{2}\text{द्वि}\times\text{कोज्या}^{2}\text{अ}$

अत्र वर्गघातस्थले घातवर्ग समत्वेन गृहीत । एव चतुर्थखण्डस्यैतादृग्रूप-
त्वेन सजातीयानां धनर्णखण्डसाम्यान्नाशे कृते ऐक्यचापज्यावर्गोऽयम् =

$$= \frac{\text{ज्या}^{2}\text{अ कोज्या}^{2}\text{द्वि}+\text{२ज्याअ कोज्याद्वि ज्याद्वि कोज्याअ}+\text{ज्या}^{2}\text{द्वि कोज्या}^{2}\text{अ}}{\text{त्रि}^{2}}$$

$$= \left(\frac{\text{ज्याअ कोज्याद्वि}+\text{ज्याद्वि कोज्याअ}}{\text{त्रि}}\right)^{2}$$ अत्र (ऊर्ध्वे समीकरणे)

मध्यखण्डे ज्याद्वयकोटिज्याद्वयघातयोर्घातो द्विघ्नोऽस्ति, स च परस्पर-
भुजज्याकोटिज्या घातयोर्घातेन द्विगुणेन सम इत्येव वा

$$\frac{\text{ज्या}^{2}\text{अ}\cdot\text{कोज्या}^{2}\text{द्वि}+\text{२ ज्याअ}\cdot\text{कोज्याद्वि}\cdot\text{ज्याद्वि कोज्याअ}+\text{ज्या}^{2}\text{द्वि कोज्या}^{2}\text{अ}}{\text{त्रि}^{2}}$$

अस्य मूलमैक्यचापज्येयम् $=\frac{\text{ज्याआ}\cdot\text{कोज्याद्वि}+\text{ज्याद्विकोज्याआ}}{\text{त्रि}}$ अत उपपन्नम् 'मिथः कोटिज्यकाभिघ्न्यौ' इति ।

एवमन्तरचापज्यानयने चोक्तवत् 'ग पू अ क' त्रिज्यावृत्तं कृत्वा तत्र (पू) पूर्वरेखातः इष्टैकदिशि चापयोर्भुजज्ये भुजरूपे परिधिसंस्पृष्टे कार्ये । (बृचा= पूक, पूअ=लचा ) तथा तदग्राभ्यां तत्सम्बन्धिकोटिजीवे च कोटिरूपे दक्षिणोदग्रेखासंस्पृष्टे च कार्ये ( अच=ज्यालचा । अज=कोज्याल । कम= ज्याबृचा, कन=कोज्याबृचा) तेन च समुत्पन्नमन्तरचापसम्बन्धिक्षेत्रम् ।

( चक ) भुजज्यान्तरं भुजः । ( अच ) कोटिज्यान्तरं कोटिः । तद्वर्गयोगपदं तदग्राभ्यां ( कअ ) तिर्यग्रेखा कर्णः । अथ कर्णोऽयमेवान्तरचापसम्बन्धिक्रमोत्क्रमज्यारूपभुजकोटिभ्यामपि सम्भवतीति ते चात्र ज्ञातव्ये । तदर्थमेतत्कर्णैकाग्रं यावत् केन्द्रात् त्रिज्याख्या रेखा ( केअ ) कृत्वा, तद्रेखातश्च 'पूर्वरेखातो भुजज्यादानवत्' कर्णद्वितीयाग्र ( अ ) यावद्रेखाऽन्या ( कर ) कार्या, साऽन्तरचापक्रमज्या ( कर ) भुजरूपाऽस्ति । तज्ज्यामूल( र ) तदाऽऽद्यकर्णाग्र( अ ) योरन्तरं( रअ ) त्रिज्याग्ररेखागतमन्तरचापोत्क्रमज्यामितं कोटिरूपम्=रअ । अथाभ्यामपि स एव प्राक्साधितः ( अक ) कर्ण उत्पद्यते द्रष्टव्यमेतदेव क्षेत्रम् ।

अत्र कर्णार्धमन्तरचापखण्डस्य ज्याऽस्ति । अस्यास्मान्तरज्यासम्बन्ध्युत्क्रमज्याज्ञानतोऽपि 'त्रिज्योत्क्रमज्यानिहते' इत्यादिना ससिद्धिरतो ज्ञातपूर्वभुजकोट्यग्रगतान्तरचापखण्डज्यातोऽपि विलोमेनान्तरचापज्यासिद्धिरचैक्यचापज्यानयनवत् खण्डविन्यासेन सुगमेत्युपपन्नमन्तरचापोत्क्रमपि ।

१, ' चक =मक—नच= याबृ—ज्याल । अच=अज—कन=कोटिज्यान्तरम् ।

**वा·भा·**=''यथोच्यते, भु=ज्याबृ−ज्याल। को=कोज्याल−कोज्याबृ।

$\text{क}=\text{२ज्या}_{\frac{१}{२}}(\text{बृ-ल})$ $\therefore$ $(\text{ज्याबृ-ज्याल})^{२}+(\text{कोज्याल-कोज्याबृ})^{२}=$

$\text{४ज्या}^{२}_{\frac{१}{२}}(\text{बृ-ल})=$

$\text{ज्या}^{२}\text{बृ}+\text{ज्या}^{२}\text{ल}-\text{२ज्याबृ ज्याल}+\text{कोज्या}^{२}\text{ल}+\text{कोज्या}^{२}\text{बृ}-\text{२ कोज्याल}\cdot\text{कोज्याबृ}$

$=\text{२त्रि}^{२}-\text{२ ज्याबृ ज्याल}-\text{२ कोज्याल}\times\text{कोज्याबृ}=$

$\therefore$ $\text{२ ज्या}^{२}_{\frac{१}{२}}(\text{बृ−ल})=\text{त्रि}^{२}-\text{ज्याबृ}\cdot\text{ज्याल}-\text{कोज्याल}\times\text{कोज्याबृ}$

अथ ''त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं तदर्धांशकशिञ्जिनी वेत्यादिना—''

$$\sqrt{\frac{\text{त्रि}\times\text{उज्या}(\text{बृ−ल})}{\text{२}}}=\text{ज्या}_{\frac{१}{२}}(\text{बृ−ल})$$

$$\therefore\ \text{त्रि}\times\text{उज्या}(\text{बृ−ल})=\text{२ ज्या}^{२}_{\frac{१}{२}}(\text{बृ-ल})$$

$$\therefore\ \text{उज्या}(\text{बृ−ल})=\frac{\text{२ ज्या}^{२}_{\frac{१}{२}}(\text{बृ-ल})}{\text{त्रि}}$$

$$\therefore\ \text{उज्या}(\text{बृ−ल})=\frac{\text{त्रि}^{२}-\text{ज्याबृ ज्याल}-\text{कोज्याल}\times\text{कोज्याबृ}}{\text{त्रि}}$$

$$\therefore\ \text{कोज्या}(\text{बृ−ल})=\text{त्रि}-\text{उज्या}(\text{बृ−ल})$$

$$=\frac{\text{त्रि}^{२}-\text{त्रि}^{२}+\text{ज्याबृ}\cdot\text{ज्याल}+\text{कोज्याल}\times\text{कोज्याबृ}}{\text{त्रि}}$$

$$=\frac{\text{ज्याबृ}\cdot\text{ज्याल}+\text{कोज्याल}\times\text{कोज्याबृ}}{\text{त्रि}}$$

$$\therefore\ \text{ज्या}^{२}(\text{बृ-ल})=\text{त्रि}^{२}-\text{कोज्या}^{२}(\text{बृ−ल})$$

$$=\text{त्रि}^{२}-\left(\frac{\text{ज्याबृ}\cdot\text{ज्याल}+\text{कोज्याल}\cdot\text{कोज्याबृ}}{\text{त्रि}}\right)^{२}$$

$$=\frac{\text{त्रि}^{४}-\text{ज्या}^{२}\text{बृ ज्या}^{२}\text{ल}-\text{कोज्या}^{२}\text{ल}\times\text{कोज्या}^{२}\text{बृ}-\text{२ज्याबृ ज्याल}\times\text{कोज्याल}\times\text{कोज्याबृ}}{\text{त्रि}^{२}}\ *$$

* अत्र $\text{त्रि}^{४}=\text{त्रि}^{२}\times\text{त्रि}^{२}=(\text{कोज्या}^{२}\text{ल}+\text{ज्या}^{२}\text{ल})(\text{ज्या}^{२}\text{बृ}+\text{कोज्या}^{२}\text{बृ})$

$=\text{कोज्या}^{२}\text{ल}\times\text{ज्या}^{२}\text{बृ}+\text{कोज्या}^{२}\text{ल}\times\text{कोज्या}^{२}\text{बृ}+\text{ज्या}^{२}\text{ल}\times\text{ज्या}^{२}\text{बृ}+\text{ज्या}^{२}\text{ल}\times\text{कोज्या}^{२}\text{बृ}$

अनेन * एतत्स्वरूपमाश्यमुत्थाप्य तुल्यधनर्णयोर्नाशं विधाय ततः

$$\text{ज्या}^{२}(\text{बृ}-\text{ल})$$

$$=\frac{\text{कोज्या}^{२}\text{ल}\times\text{ज्या}^{२}\text{बृ}+\text{ज्या}^{२}\text{ल}\times\text{कोज्या}^{२}\text{बृ}-२\text{ज्याल}\times\text{ज्याबृ}\times\text{कोज्याल}\times\text{कोज्याबृ}}{\text{त्रि}}$$

$$=\left(\frac{\text{कोज्याल}\times\text{ज्याबृ}-\text{ज्याल}\times\text{कोज्याबृ}}{\text{त्रि}}\right)^{२}$$

अतो मूले गृहीते $\text{ज्या}(\text{बृ}-\text{ल})=\frac{\text{कोज्याल}\times\text{ज्याबृ}-\text{कोज्याबृ}\times\text{ज्याल}}{\text{त्रि}}$

अत उपपन्न भट्टोक्त्या चापान्तरज्यानयनमिति।"

अथ प्रकारान्तरेण योगान्तरचापज्योपपत्तिमाह—

**ग्रन्थकारः**—यद्वा उक्तवत् त्रिज्याव्यासार्धेन कृतवृत्ते दिगङ्कादुभयत-इष्टांशान् दत्वा चिह्ने कार्ये तच्चिह्नस्पर्शिका रेखा कार्या सा द्विगुणितेष्टांश-रूपसम्पूर्णधनु सम्बन्धिसम्पूर्णज्या, तदर्धमिष्टांशरूपार्धधनु सम्बन्ध्यर्धज्ये-त्यस्या एव गणिते प्रयोजनादिमामेव ज्यात्वेन व्यवहरन्त्याचार्या इति स्थितिरस्ति।

अथ त्रिज्यावृत्ते या सम्पूर्णधनु सम्बन्धिसम्पूर्णज्या तदर्धमिता तु प्रत्यक्ष त्रिज्यार्धवृत्ते चक्रांशाङ्किते तत्सम्पूर्णज्याऽस्ति। $\left(\frac{\text{पू}\times\text{त्रि}}{\text{त्रि}\;२}=\frac{\text{पू}}{२}=\text{ज्याध}\right)$।

अतस्त्रिज्यार्धवृत्ते चक्रांशाङ्किते तत्सम्पूर्णधनु सम्बन्धिसम्पूर्णज्याऽस्ति। अतस्त्रिज्यार्धमितेन व्यासार्धेन (पू क ग ग) वृत्तं *दिगङ्क चक्रांशाङ्कितं च कार्यम्। तद्वृत्ते (पू) दिगङ्कादुभयतोऽभीष्टांशान् दत्वा तदग्राभ्यां या (कन) रेखैका निर्मीयते, सा तु त्रिज्यार्धवृत्तीयद्विगुणितेष्टांशरूपसम्पूर्णधनु सम्बन्धिसम्पूर्णज्या याऽपि त्रिज्यावृत्तीयेष्टांशरूपतदर्धधनु सम्बन्ध्यर्धज्या स्यात् याऽत्र गणितज्ञानां तदर्धज्यात्वेन प्रसिद्धा वरीवर्त्ति।

अत प्रकृते त्रिज्यार्धवृत्ते (पू) पूर्वचिह्नात् सव्ये (पू न) द्विगुणलघु-चापांशान् 'पू क' द्विगुणबृहच्चापांशान् दत्वा चिह्नद्वय कुर्यात्।

* अग्निमपृष्ठे क्षेत्रमवलोकनीयम्।

ततः पूर्वचिह्नद्वयपर्यन्तं ( पून, पूक ) रेखे सम्पूर्णजीवाकारे कार्ये। ते तु त्रिज्याखण्डप्रमाणसिद्धे लघुबृहच्चापज्ये एव त्रिज्यावृत्तीयस्वाभिमतार्धजीवास्वरूपे भवतः।

एवं तच्चिह्नाभ्यां (प) पश्चिमचिह्नपर्यन्तमपि (प क, प न) रेखे कार्ये। ते च लघुबृहच्चापसम्बन्धिद्विगुणकोटयग्ररूपसम्पूर्णधनुः सम्बन्धिसम्पूर्णजीवाकारे अपि त्रिज्यावृत्तीयस्वाभिमतार्धज्याकारकोटिज्यारूपे एव भवतः।

एवं तच्चिह्नद्वयस्पृगेका (क न) रेखा च कार्या साऽत्र द्विगुणचापैक्यरूपसम्पूर्णधनुः सम्बन्धिसम्पूर्णज्याकाराऽपि त्रिज्यावृत्तीयस्वाभिमतार्धज्याकारचापैक्यज्यारूपैव स्यात्। तथा च लघुबृहच्चापसम्बन्धिभुजज्याकोटिज्यासम्बद्धं ( पूकपन ) विषमचतुर्भुजं क्षेत्रमुत्पन्नम्। †

अस्य पूर्वापरचिह्नगामी (पू प) त्रिज्यारूप एकः अव्यक्तः कर्णस्त्रिज्यार्धेन वृत्तकरणात्। द्वितीयश्चापैक्यज्यामितस्तु(कन)अव्यक्तः। अत्र "इष्टोऽत्र* कर्णः प्रथमं प्रकल्प्य" इत्यादि "लम्बैक्यवर्गस्य पदम्" इत्यन्तपाद्युक्तग्रन्थेन ज्ञातत्रिज्यारूप ( पूप ) कर्णोभयतस्त्रिभुजाभ्यां लम्बाबाधानयनद्वारा चापैक्यज्यारूप( क न )द्वितीयकर्णस्याज्ञातस्य ज्ञानं सुबोधम्।

तथाहि "त्रिभुजे भुजयोर्योग"—इत्यादिना लघुचापसम्बन्धित्रिभुजाबाधे।

$$\frac{\text{लभुव}}{\text{त्रि१}},\ \frac{\text{लकोव}}{\text{त्रि१}}\ ।\ \text{लम्बश्च} = \frac{\text{लभु लको}}{\text{त्रि}}\ ।$$

एवं बृहच्चापसम्बन्धित्रिभुजाबाधे लम्बश्च। $\frac{\text{बृभु}^{2}}{\text{त्रि}},\ \frac{\text{बृको}^{2}}{\text{त्रि}},\ \frac{\text{बृभु बृको}}{\text{त्रि}}$

---

*सूत्रमिदं भास्करीयलीलावत्यां क्षेत्र-व्यवहारेऽस्ति। अनेन मत्समयेऽपि भास्करग्रन्थस्यैव विशेषतया पठनपाठनमासीदिति सूच्यते। † अत्र पून, कप रेखा पाठकेन न धर्तव्या।

अथात्रैकदिक्काबाधान्तरवर्गः $= \frac{\text{लभु}^2 + \text{२लभु·वृभु} + \text{वृभु}^2}{\text{त्रि}^2}$

अ व स्यवर्गैक्य $= \frac{\text{लभु}^2 \text{ लको}^2 \text{१} + \text{लभु लको वृ भु·वृ·को२} + \text{वृभु}^2 \text{·वृ को}^2}{\text{त्रि}^2}$

अनयोर्योगः $= \frac{\text{लभु}^2 \text{ वृ को}^2 + \text{लभु वृको वृभु लको·२} + \text{वृभु}^2 \text{ लको}^2}{\text{त्रि}^2}$

अस्य मूलं चापैक्यज्यारूपो द्वितीयः कर्णं इत्युपपन्नम् "मिथः कोटिज्यकाभिघ्न्यौ" इत्यादि ।

**वा· भा·**=यथा पूपन त्रिभुजे पून=ज्याल,पन=कोज्याल,पूतौ भुजौ।पूप=त्रि=भूमिः ।

ततः "त्रिभुजे भुजयोर्योगः"-इत्यादिना $\frac{(\text{ज्याल}+\text{कोज्याल})(\text{कोज्याल}-\text{ज्याल})}{\text{त्रि}}$=लब्धिः

अनयोना भू (त्रि) दलिता, तदा (पूत) लघ्वाबाधा $= \frac{\text{त्रि}^2 - (\text{कोज्याल}^2 - \text{ज्याल}^2)}{\text{त्रि २}}$

$= \frac{\text{त्रि}^2 - \text{कोज्याल}^2 + \text{ज्याल}^2}{\text{२ त्रि}} = \frac{\text{२ ज्याल}^2}{\text{२त्रि}} = \frac{\text{ज्याल}^2}{\text{त्रि}}$ ,, अथैव करयोन तप=बृमा

$= \frac{\text{त्रि}^2 + (\text{कोज्याल}^2 - \text{ज्याल}^2)}{\text{२त्रि}} = \frac{\text{त्रि}^2 - \text{ज्याल}^2 + \text{कोज्याल}^2}{\text{२त्रि}} = \frac{\text{२ कोज्याल}^2}{\text{२त्रि}} = \frac{\text{कोज्याल}^2}{\text{त्रि}}$,,

अथ ततः "स्वाबाधाभुजकृत्योरन्तरमूलं प्रजायते लम्बः" इत्यादिना

लम्बवर्गः =नतं=पूनं-पूतं = $\text{ज्याल}^2 - \frac{\text{ज्याल}^4}{\text{त्रि}^2} = \frac{\text{ज्याल}^2 (\text{त्रि}^2 - \text{ज्याल}^2)}{\text{त्रि}^2}$

$= \frac{\text{ज्याल}^2 \times \text{कोज्याल}^2}{\text{त्रि}^2}$ । अस्य मूलं लम्बः $= \frac{\text{ज्याल} \times \text{कोज्याल}}{\text{त्रि}}$ =नत,

एवमेव 'पकप्' त्रिभुजे लम्बः $= \frac{\text{ज्यावृ}^2}{\text{त्रि}}$, अतउक्तवल्लम्बवर्गः $= \text{ज्यावृ}^2 - \frac{\text{ज्यावृ}^4}{\text{त्रि}^2}$

$= \frac{\text{ज्यावृ}^2 (\text{त्रि}^2 - \text{ज्यावृ}^2)}{\text{त्रि}^2} = \frac{\text{ज्यावृ}^2 \times \text{कोज्यावृ}^2}{\text{त्रि}^2}$ $\therefore$ ल $= \frac{\text{ज्यावृ} \times \text{कोज्यावृ}}{\text{त्रि}}$,

अथा—"बाधयो रेकककुप्त्वयोर्यत्स्यादन्तर तत्कृतिसयुतस्य । लम्बैक्यवर्गस्य पदं द्वितीयः कर्णो भवेत्" इत्यादिना, तावत् लम्बैक्यम्=

$= \frac{\text{ज्याल} \times \text{कोज्याल}}{\text{त्रि}} + \frac{\text{ज्यावृ} \times \text{कोज्यावृ}}{\text{त्रि}} = \frac{\text{ज्याल कोज्याल} + \text{ज्यावृ·कोज्यावृ}}{\text{त्रि}}$

तथाऽऽबाधान्तरम् $= \frac{\text{ज्याबृ}^{२} - \text{ज्याल}^{२}}{\text{त्रि}}$, अतः कर्णवर्गः = कर्न² = आब² + लपे²

$$= \left( \frac{\text{ज्याल कोज्याल} + \text{ज्याबृ कोज्याबृ}}{\text{त्रि}} \right)^{२} + \left( \frac{\text{ज्याबृ}^{२} - \text{ज्याल}^{२}}{\text{त्रि}} \right)^{२}$$

$$= \frac{\text{ज्याल}^{२}\,\text{कोज्याल}^{२} + \text{ज्याबृ}^{२} \times \text{कोज्याबृ}^{२} + \text{२ज्याल}\cdot\text{कोज्याल} \times \text{ज्याबृ}\cdot\text{कोज्याबृ} \times \text{ज्याबृ}^{४} \times \text{ज्याल}^{४} - \text{२ज्याबृ}^{२} \times \text{ज्याल}^{२}}{\text{त्रि}^{२}}$$

$$= \frac{\text{ज्याल}^{२}(\text{कोज्याल}^{२} + \text{ज्याल}^{२}) + \text{ज्याबृ}^{२}(\text{कोज्याबृ}^{२} + \text{ज्याबृ}^{२}) + \text{२ज्याल ज्याबृ} \times \text{कोज्याल कोज्याबृ} - \text{२ज्याबृ}^{२} \times \text{ज्याल}^{२})}{\text{त्रि}^{२}}$$

$$= \frac{\text{ज्याल}^{२} \times \text{त्रि}^{२} + \text{ज्याबृ}^{२} \times \text{त्रि}^{२} + \text{२ज्याल} \times \text{ज्याबृ कोज्याल} \times \text{कोज्याबृ} - \text{ज्याबृ}^{२}\,\text{ज्याल}^{२} - \text{ज्याबृ}^{२}\,\text{ज्याल}^{२}}{\text{त्रि}^{४}}$$

$$= \frac{\text{ज्याल}^{२}\,(\text{त्रि}^{२} - \text{ज्याबृ}^{२}) + \text{ज्याबृ}^{२}\,(\text{त्रि}^{२} - \text{ज्याल}^{२}) + \text{२ज्याल ज्याबृ कोज्याल}\cdot\text{कोज्याबृ}}{\text{त्रि}^{२}}$$

$$= \frac{\text{ज्याल}^{२} \times \text{कोज्याबृ}^{२} + \text{ज्याबृ}^{२} \times \text{कोज्याल}^{२} + \text{२ज्याल ज्याबृ कोज्याल}\cdot\text{कोज्याबृ}}{\text{त्रि}^{२}}$$

$$= \left( \frac{\text{ज्याल} \times \text{कोज्याबृ} + \text{ज्याबृ को ज्याल}}{\text{त्रि}} \right)^{२}$$

$\therefore$ कर्न = कर्ण $= \frac{\text{ज्याल} \times \text{कोज्याबृ} + \text{ज्याबृ} \times \text{कोज्याल}}{\text{त्रि}}$   अत उपपन्नं सर्वम् ।

'तदन्यलम्बाच्छ्रवणो, लघु—र्नै-
स्युक्तं तु यैस्तन्न हि युक्तमत्र ।
भुजैक्यकोणात् क्षितिजे भुजैक्ये
स्यात्यल्पकर्णो न सदाऽन्यलम्बः ॥
तदन्यकर्णेत्रिभुजेऽत्र मुख्ये
भुजावधे ये विषमैककोणात् ।
तद्भेदवाहौ तु विलम्बकोटी
कर्णः स्वकीयोऽतिलघुर्मतो मे ॥
एवं चापान्तरज्यास्वरूपमपि ।''

**वा. भा.** ''लीलावत्या''कर्णाश्रितस्वल्पभुजैक्यमुर्वी''- मित्यादि-इष्ट-कर्णकल्पनाया भास्करैः ''तदन्यलम्बाच्छ्रवणो लघुर्ने'' ति यदुक्तं तत

समीचीन नेति यथोच्यते—तत्र विषमचतुर्भुजस्यैकान्तरकोणावाक्रम्य त्रिभुजत्वे जाते यथा अकग त्रिभुजम् ।




अत्र सङ्कुचितकर्णः=कन, तथाऽन्यलम्बश्च=कल । इह 'कल'तोऽधिक 'कन'तोऽल्प यावत् अन्यकर्णमान कल्प्यते तावत् अकग त्रिभुजत्वमेव स्थास्यति नहि चतुर्भुजत्व यास्यति । तेनात्र 'तदन्यकर्णान्न लघुस्तदेद' अय पाठ समीचीनो वासनाऽनुकूल । अथान्यकर्णज्ञानाय पूर्वं 'अ ल' आबाधा प्रसाध्य, तस्य 'अ न' भुजस्य न्यून धिकस्थितिवशेन यदन्तर=लन, स भुज । कल=लम्ब कोटि। तयोर्वर्गयोगपद कर्ण =कन=अन्यकर्ण । अत्रायमतिलघु । अतोऽधिके कर्णमाने कल्पिते चतुर्भुजत्व सिद्ध्यति । भास्कराचार्यास्तु 'प्राय प्राचीनोदाहरणदर्शनात् भ्रान्ता , यतस्तत्र सङ्क्षोभ्यमान कर्णौ भुजैक्यभूमौ लम्ब एव भवति, तेन न भास्करे विशेषापत्तिरिति ।"

**अन्धकारः**—"त्रिज्यार्धवृत्ते*चक्राशाङ्किते प्रथम (पू प) पूर्वापररेखाऽङ्कया। तत पूर्वचिह्नादेकादिशि ( पू न, पू ग )=लघुबृहच्चापज्ये, सपूर्णजीवावदेये । तदग्राभ्या ( प न, प ग ) तत्कोटिज्ये च ( प ) पश्चिमचिह्नपर्यन्त कार्ये । तथा तदग्राभ्यामेका तिर्यग्रेखा च ( न ग ) चापान्तरज्यारूपा कार्या । तथा च ( पू न प त्रिभुजे पू प ) त्रिज्याभूमौ लघुभुजज्याकोटिज्यामितौ ( पू न, न प ) भुजौ, ( एव पूकप त्रिभुजे पूप =त्रि=भु । क पू=ज्याबृ, कप=कोज्याबृ ) बृहद्भुजज्याकोटिज्यामितौ चेति त्रिभुजद्वयमुत्पन्नम् । द्रष्टव्य पूर्वलिखितक्षेत्रम् ।

अथाभ्या त्रिभुजाभ्या लम्बाबाधानयन यथोक्तवत् कृत्वा लम्बनिपातान्तररूपैकदिकाबाधान्तर भुजो लम्बान्तर कोटिश्चापान्तरज्या कर्ण इति क्षेत्रात् स्पष्टम् चापान्तरज्यानयनमप्युक्तखण्डन्यासरीत्या ।

* १०१ पृष्ठस्थमवलोकनीयम् ।

**ग्रन्थकारः**—"एवं सन्ति बहवः प्रकाराः शुद्धमार्गप्रवृत्तसुनर्दीनाम् । अत्रोर्ध्वाधरपक्त्यनुरोधेन भुजज्याकोटिज्ययोस्तिर्यग्गुणनसिद्धया वज्राभ्यासाद्भावना व स्वत ससिद्धमेवेति लौकिकफलनिष्ठज्यप्रभावनावदपर्वीज्याभावनेयमुक्ता च पैक्यान्तरज्यासिद्ध्यर्थम् । नैतावता कालज्याभावनास्वरूपेण प्रतिपादितबीजगणितीयभावनोपपत्तिः वा तदुपपत्ति सिद्धा, यथैक्यान्तरजीवारूपमसदिग्ध सबुद्धानाम् । स्वतन्त्रयाऽस्मद्रुक्त्या तु स्यादितायमेव ज्याभावनापपत्तिर योक्तस्वरूपमात्रसिद्धभावनोपपत्तिमिनानीनाक्षेपस्य पल्लवितेन ।"

**वा भा** एव स तीति । एव योगज्याऽन्तरज्यासाधनोपपत्तिप्रकारबाहुल्यात्स्लोकनो नपठान्द्विगोलप्रकारो द्रष्टव्य । अत्र प्र थविस्तृतिभीत्या न उपन्यस्त इति ॥

अथ मुनीश्वरोपरि साक्षेपमाह—

> धृत्तिस्था च यैः सार्वभौमाशयेऽपि
>
> मदुक्तोदितैक्यान्तरज्योपपत्तिः । १
>
> असद्भावनाख्यस्वकीयोपपत्तौ
>
> प्रदत्तो जलस्याञ्जलिस्तैः सुदुष्टः ॥ ७२ ॥

**वा भा** यैर्मुनीश्वरैः सार्वभौमाशये सिद्धान्तसार्वभौमटीकायामित्यर्थः । मदुक्ता इयमेव वृत्तिस्था ऐक्यान्तरज्योपपत्तिरुदिता, तैस्तु असद्भावनाख्यायां स्वकीयोपपत्तौ जलस्य सुदुष्टाऽञ्जलिः प्रदत्त । अर्थात् मुनीश्वरेण स्वप्र थ टीकायां स्ववासना दूरीकृत्य मदीया वासना निवेशिता, तेन स्ववासना मृता ज्ञात्वा तिलाञ्जलिर्दत्त इति भाव । अत्राचार्यस्याभिप्राय इति नहि मानाऽस्ति । यतो मुनीश्वरेण स्वकृतसिद्धान्तस्य टीका स्वाशयप्रकाशिनीति नाम्नी रचितेति॥

> अथात्र दोर्ज्याविगमाद्भवामि
>
> द्विन्यघ्निपक्षप्रभुजांशजीवाम् ।
>
> दोःकोटिजीवाभिहतिर्द्विनिघ्नी
>
> त्रिज्योद्धृता सा द्विगुणांशजीवा ॥ ७३ ॥

पूर्वार्धमत्तरगणरूपम्। उत्तरार्धोपपत्ति । अत्र यथा ज्यासाधनाय भुजांशा =२भु=भु, भु, अथ "चापयोरिष्टयोर्दोर्ज्ये"—इत्यादिना ज्या२भु=

$$\frac{\text{ज्याभु कोज्याभु}+\text{ज्याभु कोज्याभु}}{\text{त्रि}}=\frac{\text{२ ज्याभु कोज्याभु}}{\text{त्रि}}$$ अत उपपन्नम्। तेनेयोपपत्तिः पुरस्ताद्ग्रन्थकृता दर्शितेनेति ॥

अथ त्रिनिघ्नभुजांशज्यामाह—

दोर्ज्याकराशिज्यकया विभक्ता
फलस्य वर्गेण विहीनितं च ।
त्र्यं, भुजज्यागुणितं, त्रिनिघ्न-
भुजांशकानामिह शिञ्जिनी स्यात्॥७४॥

**वा. भा.** अत्रोपपत्ति। तत्रतः पूर्वपद्येन ज्या२भु= $\frac{\text{२ ज्याभु कोज्याभु}}{\text{त्रि}}$।

तथा 'दोर्ज्योश्च कोटिमौर्व्योश्चे'—त्यादिना कोज्या२भु= $\frac{\text{कोज्या}^2\text{भु}-\text{ज्या}^2\text{भु}}{\text{त्रि}}$

अथ तत ज्या३भु=ज्या(२भु+भु)= $\frac{\text{ज्या२भु}\times\text{कोज्याभु}+\text{कोज्या२भु ज्याभु}}{\text{त्रि}}$

$$=\left(\frac{\text{२ ज्याभु कोज्याभु}}{\text{त्रि}\times\text{त्रि}}\right)\text{कोज्याभु}+\left(\frac{\text{कोज्या}^2\text{भु}-\text{ज्या}^2\text{भु}}{\text{त्रि}\times\text{त्रि}}\right)\text{ज्याभु}$$

$$=\frac{\text{२ज्याभु कोज्या}^2\text{भु}}{\text{त्रि}^2}+\frac{\text{कोज्या}^2\text{भु ज्याभु}-\text{ज्या}^3\text{भु}}{\text{त्रि}^2}$$

$$=\frac{\text{३ ज्याभु कोज्या}^2\text{भु}-\text{ज्या}^3\text{भु}}{\text{त्रि}^2}=\frac{\text{३}\times\text{ज्याभु}\left(\text{त्रि}^2-\text{ज्या}^2\text{भु}\right)-\text{ज्या}^3\text{भु}}{\text{त्रि}^2}$$

$$=\frac{\text{३ज्याभु त्रि}^2-\text{३ज्या}^3\text{भु}-\text{ज्या}^3\text{भु}}{\text{त्रि}^2}=\frac{\text{३ज्याभु त्रि}^2-\text{४ज्या}^3\text{भु}}{\text{त्रि}^2}=\text{३ज्याभु}-\frac{\text{४ज्या}^3\text{भु}}{\text{त्रि}^2}$$

$$=\text{ज्याभु}\left(\text{३}-\frac{\text{ज्या}^2\text{भु}}{\frac{\text{त्रि}^2}{\text{४}}}\right)=\text{ज्याभु}\left\{\text{३}-\left(\frac{\text{ज्याभु}}{\text{ज्या १राश}}\right)^2\right\}$$ अत उपपन्न सर्वम्।

तथा च, $\text{कोज्या४भु} = \text{कोज्या}(\text{२भु}+\text{२भु}) = \frac{\text{कोज्या}^{२}\text{२भु} - \text{ज्या}^{२}\text{२भु}}{\text{त्रि}}$

$$= \frac{१}{\text{त्रि}} \left\{ \left( \frac{\text{कोज्या}^{२}\text{भु} - \text{ज्या}^{२}\text{भु}}{\text{त्रि}} \right)^{२} - \frac{४\ \text{ज्या}^{२}\text{भु} \times \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{२}} \right\} =$$

$$= \frac{\text{कोज्या}^{४}\text{भु} + \text{ज्या}^{४}\text{भु} - \text{२कोज्या}^{२}\text{भु}\ \text{ज्या}^{२}\text{भु} - ४\ \text{ज्या}^{२}\text{भु} \times \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{३}}$$

$$= \frac{(\text{त्रि}^{२} - \text{ज्या}^{२}\text{भु})\ \text{कोज्या}^{२}\text{भु} + (\text{त्रि}^{२} - \text{कोज्या}^{२}\text{भु})\ \text{ज्या}^{२}\text{भु} - \text{६ज्या}^{२}\text{भु}\ \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{३}}$$

$$= \frac{+\text{त्रि}^{२}\text{कोज्या}^{२}\text{भु} - \text{ज्या}^{२}\text{भु}\ \text{कोज्या}^{२}\text{भु} + \text{त्रि}^{२}\text{ज्या}^{२}\text{भु} - \text{कोज्या}^{२}\text{भु}\ \text{ज्या}^{२}\text{भु} - \text{६ज्या}^{२}\text{भु}\ \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{३}}$$

$$= \frac{\text{त्रि}^{२}(\text{ज्या}^{२}\text{भु} + \text{कोज्या}^{२}\text{भु}) - ८\ \text{ज्या}^{२}\text{भु}\ \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{३}} = \frac{\text{त्रि}^{४} - \text{८ज्या}^{२}\text{भु}\ \text{कोज्या}^{२}\text{भु}}{\text{त्रि}^{३}}$$

अत उपपद्यते मदीय सूत्रम् ।

"भुजज्याकोटिज्याहतिकृतिमिति नागगुणिताम्
विशोध्य त्रिज्याया कृतिकृतिमितेः शेषमिह यत् ।
विभक्तं त्रिज्याघनमितहरेणात्र भवति
श्रुतिभांशानां सा गुणमिति रहो कोटिजनिता । इति ॥

नृपाहतो दोर्गुणवर्गवर्ग-
स्त्र्येषुनिघ्नी त्रिभमौर्विकायाः ।
कृतेः कृतिः, स्वगुणितो विशोध्य
नगैर्हतां वर्गसमाहतिं च ॥ ७६ ॥

दोर्ज्या त्रिमौर्व्यो,—रथशेषनिघ्नी
दोर्ज्या, त्रिभज्याकृतिवर्गभक्ता ।
लब्धं हि पञ्चभुजांशजीवा
विलोमतोऽर्धत्रिलवादिजीवाः ॥ ७७ ॥

$$=\frac{\text{ज्याभु}\{-१० \text{ ज्याभु}^{२}\text{त्रि}^{२}+१० \text{ ज्याभु}^{४}+५(\text{त्रि}^{२}-\text{ज्याभु}^{२})(\text{त्रि}^{२}-\text{ज्याभु}^{२})+\text{ज्याभु}^{४}\}}{\text{त्रि}^{४}}$$

$$=\frac{\text{ज्याभु}\{-१० \text{ ज्याभु}^{२}\text{त्रि}^{२}+१० \text{ ज्याभु}^{४}+५(\text{त्रि}^{४}-२\text{त्रि}^{२}\cdot\text{ज्याभु}^{२}+\text{ज्याभु}^{४})+\text{ज्याभु}^{४}\}}{\text{त्रि}^{४}}$$

$$=\frac{\text{ज्याभु}\{-१० \text{ ज्याभु}^{२}\cdot\text{त्रि}^{२}+१० \text{ ज्याभु}^{४}+५\text{त्रि}^{४}-१० \text{ त्रि}^{२}\cdot\text{ज्याभु}^{२}+५\text{ज्याभु}^{४}+\text{ज्याभु}^{४}\}}{\text{त्रि}^{४}}$$

$$=\frac{\text{ज्याभु}(-१० \text{ ज्याभु}^{२}\cdot\text{त्रि}^{२}+१६ \text{ ज्याभु}^{४}+५\text{त्रि}^{४}-\text{त्रि}^{२}\cdot\text{ज्याभु}^{२}१०)}{\text{त्रि}^{४}}$$

$$=\frac{\text{ज्याभु}(-२० \text{ ज्याभु}^{२}\cdot\text{त्रि}^{२}+१६ \text{ ज्याभु}^{४}+५\text{त्रि}^{४}}{\text{त्रि}^{४}},$$ अत उपपन्नं सर्वम् ।




अथ क्षेत्रयुक्त्या द्वित्रिचतुःपञ्चगुणितभुजांशज्यानयनोपपत्तिः ।

यथेष्टकोणः=इअउ, तत्र अइ=इष्टखण्डं त्रिज्यां मत्वा, 'इ' बिन्दुतः 'अक' रेखायां लम्बः=इउ ∴ ज्या इअउ$=\frac{\text{त्रि}\times\text{इउ}}{\text{अइ}}$ । अथ ततः अउ=उक विधेयम् । 'क' बिन्दुतः 'अइ' वर्धितरेखायां लम्बः=कग, तदा ∵ इअ=इक ( १ । ४ ) ∴ इअक+इकअ=२इअक=कइग (१ । ३२) अतः 'इकग' त्रिभुजे ज्याकइग=ज्या २ इअउ$=\frac{\text{त्रि}\times\text{कग}}{\text{इक}}$

परन्तु 'कग' कथं ज्ञातं जातम्? । तदुच्यते अक=२ कोज्याभु=ज्ञातैव, ततः अइउ, अकग त्रिभुजयोः साजात्यात् कग $=\frac{\text{इउ}\times\text{अक}}{\text{अइ}}$, इति ।

अथ इग=गच कार्यम् । कच रेखा च कार्या । तदा कइग=कचग=२ इ·कोण, ∴ चकज=३ इ·कोणः । तत्र 'च' बिन्दुतः 'अक' वर्धित-

रेखाया लम्ब=चज, तदा ज्या३कोण = $\frac{\text{त्रि×चज}}{\text{कच}}$ । अत्रापि इक, कग ज्ञाताभ्यां 'इग' खण्डं ज्ञातं स्यादेव, तद्द्विगुणं 'अइ' त्रिज्याया संयोज्य ज्ञातम्=अच, ततः चज= $\frac{\text{इउ×अच}}{\text{अइ}}$ । अथ कज=जन कार्यम् । चन रेखा च कार्या । तदा ∠चनज=∠चकज=२ इ कोण ∠चअन+∠चनअ=∠नचत=४ इ कोण , नचत त्रिभुजे ज्यानचत=ज्या ४इ कोण= $\frac{\text{त्रि×नत}}{\text{चन}}$, अत्रापि नतज्ञानं पूर्ववत्, ततः चत=तथ कार्यम्, नथ रेखा कार्या । तदा ∠नथम=४ इ कोण ∠धनम=५ इ॰ कोण । एवं तज्ज्याऽपि, परन्त्वत्र प्रकारस्तावदेव यावत् त्रिज्यामितिस्तु रेखाद्वयोर्लम्बरूपान्तराधिकेति विज्ञेयम् ।

अथार्धांशज्यामाह ।

√ क्रमोत्क्रमज्याकृतियोगमूला-
दलं तदर्धांशकशिञ्जिनी स्यात् ।
त्रिज्योत्क्रमज्यानिहतेर्दलस्य
मूलं तदर्धांशकशिञ्जिनी वा ॥ ७८ ॥

अत्रोपपत्तिः ।



अत्र भुअ=अगक ज्याभु=कल । उज्याभु=अल

कअ=२अन=पूर्णज्याभु = २ज्या$\frac{१}{२}$भु ( २ । ३ )·

अत्र, कल²+लअ²=कअ² $\sqrt{\text{कल}^2+\text{लअ}^2}$=२ज्या$\frac{१}{२}$भु

∴ $\frac{\sqrt{\text{कल}^2+\text{लअ}^2}}{२}$=ज्या$\frac{१}{२}$भु अतउपपन्नं पूर्वार्धम् ।

अथ केनअ, कअल त्रिभुजयोः साजात्यात् $\frac{\text{नअ×कअ}}{\text{कध}}$=अल

वा $\frac{\text{ज्या}\frac{१}{२}\text{भु,×२ज्या}\frac{१}{२}\text{भु}}{\text{त्रि}}$ = उज्याभु

$\therefore$ ज्यां $\frac{१}{२}$ भु $= \frac{\text{त्रि उज्याभु}}{२}$ $\therefore$ ज्या $\frac{१}{२}$ भु $= \sqrt{\frac{\text{त्रि}\times\text{उज्याभु}}{२}}$ अत उपपन्नम् ॥

पुनरर्धांशज्यामाह—

**यदंशार्धजीवाकृतिघ्न्युत्क्रमज्या**
**स्वकीया, तदंशोत्क्रमज्याऽङ्कभक्ता ।**
**विलब्धात् पदं यत् स्वकीयांशकार्ध-**
**ज्यका साऽतिसूक्ष्माऽथवा स्यात्स्ववृत्ते॥७९॥**

अथवा स्वकीया उत्क्रमज्या येषामंशानामर्धजीवाया कृत्या गुणिता, तदंशोत्क्रमज्याङ्केन भक्ता, लब्धात् मूलं यत् तत् स्ववृत्तेऽतिसूक्ष्मा स्वकीयांशकार्धज्यका भवेत् ।

अत्रोपपत्तिः ।

अत्रेष्टचापम्=अ, ततः त्रिज्योत्क्रमज्यानिहतेरित्यादिना

$$\text{ज्यां}\frac{१}{२}\text{ अ} = \frac{\text{त्रि}\times\text{उज्याअ}}{२}$$

अन्यचापम्=क, ततः उक्तवत् ज्यां $\frac{१}{२}$ क $= \frac{\text{त्रि}\times\text{उज्याक}}{२}$

$$\frac{\text{ज्यां}\frac{१}{२}\text{अ}}{\text{ज्यां}\frac{१}{२}\text{क}} = \frac{\text{त्रि}\times\text{उज्याअ २}}{\text{२ त्रि}\times\text{उज्याक}} = \frac{\text{उज्याअ}}{\text{उज्याक}}$$

$\therefore$ ज्यां $\frac{१}{२}$ अ $= \frac{\text{उज्याअ}\times\text{ज्यां}\frac{१}{२}\text{क}}{\text{उज्याक}}$ अत उपपन्नम् ॥

**यद्यत्र भागाः खाङ्केभ्योऽधिकाः खाङ्कोनिताश्च ते ।**
**तज्ज्यायुक्तत्रिभज्यैव कल्प्या चोत्क्रमशिञ्जिनी ॥ ८० ॥**

अत्र यदि भागा नवत्यंशेभ्योऽधिकास्तदा ते नवत्यंशोनिता, शेषस्य ज्यया युक्ता त्रिभज्या या, सैव उत्क्रमज्या नवत्यधिकांशकानामिति स्पष्टम् ॥

अथ चापत्रिभागज्यामाह—

**दोर्ज्यात्रिभागस्य धनं तु तावत्**
**कृत्वा ह्रतोऽयं त्रिगुणस्य कृत्या ।**

स्वत्र्यंशयुक्तेन फलेन युक्तो-
दोर्ज्यात्रिभागः पुनरेव तस्मात् ॥ ८१ ॥
घनादिकेनैव मुहुः स्फुटः स्या-
द्दोर्ज्यात्रिभागस्त्रिलवज्यका स्यात् ।

अत्र विलोमविधिरेव वासना । ग्रन्थकार पुरो वक्ष्यत्येव । इत्यादि-विषय सि सार्वभौमेऽप्यस्ति ॥

अथ चतुर्थांशज्यामाह—

पूर्वं तु दोर्ज्याचरातो यथोक्त्या
भुजांशखण्डस्य गुणं प्रसाध्य ॥ ८२ ॥
तेनोद्धृता दोर्ज्ययका विनिघ्नी
त्रिज्याकृतिर्व्यासदलस्य वर्गे ।
द्विघ्ने, विशोध्यास्य पदस्य खण्डं
भुजांशकाब्ध्यंशगुणस्य मानम् ॥ ८३ ॥

चतुर्गुणितभुजांशज्यास्वरूपतो विलोमेनास्य वासना सुगमेति । वा "क्रमोत्क्रमज्याकृतियोगमूलाद्दल तदर्धांशकशिञ्जिनी"त्यादिना प्रथममर्धांश-ज्या, ततस्तामिष्टज्यां मत्वा पुनस्तदर्धज्यानयनोक्त्या यदर्धांशज्या सैव पूर्वचापचतुर्थांशज्येति ॥

अथ पञ्चमांशज्यामाह—

भुजांशकानां प्रथमं ज्यकायाः
ग्राह्योऽत्र पञ्चांशक आर्यवर्यैः ।
चतुर्गुणात् तद्घनतस्त्रिभज्या-
वर्गेण लब्धं भवतीह चाद्यः ॥ ८४ ॥
आद्याहतः पञ्चमभागवर्ग-
स्त्रिभज्यकावर्गविभाजितश्च ।
फलं स्वकीयेन शरांशकेन
विहीनितं शेषमितोऽन्यसंज्ञः ॥ ८५ ॥

अन्योनितायेन युतो ज्यकायाः
पञ्चांशकः, स्यात् स्फुटपञ्चमांशः ।
आद्यान्यमानं पुनरेव तस्मात्
कृत्वा स्फुटः पञ्चलवो ज्यकायाः ॥ ८६ ॥
यथोक्तरीत्येत्यसकृत् स्फुटोऽयम्
ज्येष्ठ्यंशकः पञ्चलवज्यका स्यात् ।
रीत्याऽनयेष्टान्यविभागकाना-
मपीह जीवानयनं विधेयम् ॥ ८७ ॥

अत्रापि पञ्चघ्नगुणांशज्यातो विलोमविधिना वासना ज्ञेयेति । तथा चा-वलोक्या पुरस्ताद्ग्रन्थकृत उपपत्तिः ॥

इत्थं स्वाङ्कात्पभागेषु स्यात्त्रिभागज्यकाविधिः ।
प्रोक्तस्त्र्यादिघ्नभागेषु स्वाङ्काल्पेषु तथैव सः ॥ ८८ ॥
श्री—"मिर्जा•लुकवेगो"–ऽपि वृत्तान्तःक्षेत्ररीतितः ।
स्वकल्पितं त्रिभागस्य चक्रे ज्यानयनं पुरा ॥ ८९ ॥

स्पष्टम् ।

प्र० का० अथात्र क्रमेणोपपत्तयः—

त्रिज्याव्यासार्धकृतवृत्ते स्वेष्टचापांशदोर्ज्याकोटिज्ये द्विगुणे यथा दोः-कोटिरूपे भवतस्तथा सम्पूर्णज्यानद्धये, तद्भाभ्यां कर्णस्तु द्विगुणत्रिज्या-मितो वृत्तव्यास एवेत्येकं 'टमड' जात्यक्षेत्रम् । अथ तदन्तर्गततत्सजातीयं तदर्धजात्यं च "गअक" द्वितीयम् । दोर्ज्या 'अक' भुजः । 'कग' कोटिज्या कोटिः । 'अग' त्रिज्याकर्णः । एतमाद्यजात्ये 'भ' दोः कोटियोगात् तत्कर्ण-भूमौ योऽवलम्बः 'मल', स तु द्विगुणचापांशानां ज्यारूपस्तदुभयतश्च ये (मजठ, मटस) जात्ये, ते अपि तत्सजातीये (सजातीयजात्यानुपातयोग्ये) भवतः । तत्र द्विगुणचापांशज्या=मल भुज, स्तदुत्क्रमज्योनद्विगुणत्रिज्या

* गयकतरत्रिपदानेन रेखा स्थानादि विशेषनाधिततंबोध्या गपकैरप प्रयदि... मीं दा न क्षिप्ता ।

='लट' कोटि । चापांशकोटयंशजद्विगुणज्या 'मट'=कर्ण ।.इति तृतीयम् । एवं द्विगुणचापांशजोत्क्रमज्या=उल, भुज । तत्क्रमज्यैव= 'मल, कोटि । चापांशजद्विगुणज्या=मउ, कर्ण । इति चतुर्थं प्रतीत्यर्थं जात्यक्षेत्रदर्शनम् ।




अत्र द्विगुणचापांशानां ज्यानयनार्थं (गलट) तृतीयजात्ये लघुभूताद्द्वितीयतदर्धजात्यादेवानुपात । त्रिज्याकर्णे चापदोर्ज्या भुजस्तदा चापकोटयंशजद्विगुणज्याकर्णे क इति जातो द्विगुणचापांशज्यारूपो भुज =

$$\frac{\text{अक} \times \text{मट}}{\text{गक}} = \text{मल}, = \frac{२\text{ज्याभु}\cdot\text{को}\cdot\text{ज्याभु}}{\text{त्रि}} = \text{ज्या}२\text{भु}.$$

इत्युपपन्नं दो कोटिजीवाभिहतिरित्यादि ।

अथवा ज्ञातभुजकोटिज्याभ्यां तुल्यसमासभावनया जाते द्विगुणभुजांशानां भुजज्याकोटिज्ये $\frac{\text{भु को }२}{\text{त्रि}}$, $\frac{\text{कोज्या}^{२} - \text{ज्याभु}^{२}}{\text{त्रि}}$ ।

अत्र पूर्वभुजकोटिज्याभ्यां समासभावनया जाते त्रिगुणभुजांशानां भुजज्याकोटिज्ये $\frac{\text{त्रि}^{२}\text{भु}३ - ४\text{ भु}^{३}}{\text{त्रि}}$, । $\frac{\text{को}^{३} - \text{को भु}^{२}३}{\text{त्रि}^{२}}$ ।

एवं द्विगुणभुजांशानां दोर्ज्याकोटिज्याभ्यां तुल्यसमासभावनया जाते चतुर्गुणितभुजांशानां दोर्ज्याकोटिज्ये

$$\frac{\text{को}^{३}\text{भु }४ - \text{भु}^{३}\text{को }४}{\text{त्रि}^{३}} \text{ । } \frac{\text{भु}^{४} - \text{भु}^{२}\text{को}^{२}६ + \text{को}^{४}}{\text{त्रि}^{३}}$$

अत्रापि पूर्वदोः कोटिज्याभ्यां समासभावनया पञ्चगुणितभुजांशानां जाते दोर्ज्याकोटिज्ये $\frac{\text{भु}^{३}\text{को}^{२}१० + \text{को}^{४}\text{भु }५ + \text{भु}^{५}}{\text{त्रि}^{४}}$ । $\frac{\text{भु}^{४}\text{को }५ - \text{भु}^{२}\text{को}^{३}१० + \text{को}^{५}}{\text{त्रि}^{४}}$

एवं क्रमेण द्विञ्यब्धिपञ्चगुणितभुजांशाना जीवाः= $\frac{\text{२भु को}\cdot}{\text{त्रि}}$ ।

$\frac{\text{भु}^{\text{३}}\text{४}+\text{त्रि}^{\text{२}}\cdot\text{भु}\cdot\text{३}}{\text{त्रि}^{\text{२}}}$ । $\frac{\text{को}^{\text{३}}\cdot\text{भु}\cdot\text{४}-\text{भु}^{\text{३}}\,\text{को}\text{४}}{\text{त्रि}^{\text{३}}}$ । $\frac{\text{भु}^{\text{५}}+\text{को}^{\text{४}}\,\text{भु}-\text{भु}^{\text{३}}\,\text{को}^{\text{२}}\,\text{१०}}{\text{त्रि}^{\text{४}}}$ ।

अत्र क्रमेण द्व्यादिगुणितभुजांशजज्यानामुक्तगणितोपपत्तिः स्फुटैव सुबुद्धीनां किं लिखनविस्तरेण ।

अर्धत्र्यंशचतुर्थांशपञ्चांशज्योपपत्तिरुच्यते । उक्तदृष्टान्तवृत्ते पूर्वमुक्ता ये द्विगुणचापांशास्तानत्र चापांशान्, ये च चापांशास्तान् तदर्धचापांशान् प्रकल्प्योपपत्तिरूह्या । चापोत्क्रमज्या भुजस्तत्क्रमज्या कोटिस्तद्वर्गयोगपदं चापार्धांशजद्विगुणज्या कर्णस्तदर्धमर्धज्येति स्पष्टं बालानामपि । द्वितीयप्रकारे तु लम्बनिपातसिद्धपूर्वोक्तचतुर्थजात्यस्य भुजश्चापोत्क्रमज्या, लम्बरूपा कोटिश्चापार्धांशद्विगुणज्याकर्ण इति । तत्कर्णज्ञानार्थं लाघवाद्द्वितीयजात्येनैव साजात्यात् चतुर्थजात्येऽपि तृतीयजात्यवदनुपातः । स च यथा, साध्ये चापार्धांशज्याभुजे त्रिज्याकर्णस्तदा सिद्धे चापोत्क्रमज्यातुल्ये भुजे क इति सिद्धश्चापार्धांशद्विगुणज्यारूपः कर्णः,–स्तदर्धं चापार्धांशज्या सिद्धा । चापार्धांशज्यामक्तत्रिज्योत्क्रमज्याहतिखण्डरूपा हरतुल्यलब्धौ भाज्यस्य हरवर्गतुल्यत्वनियमात् त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूलं चापार्धांशज्या इत्युपपन्नम् ।

> साजात्यतो ज्यानयनं सुधीभिर्जात्यानुपातादपि कार्यमत्र ।
> येनोक्तवत् तुल्यफलत्वतिर्न जानन्ति नेत्थं जडबुद्धयस्तु ॥

यद्वोत्क्रमज्या वियुता त्रिभज्या=( त्रि−ज्याउ )=कोटिज्यका, तत्कृतिवर्जिता च । त्रिज्याकृतिः, सा क्रममौर्विकायाः कृतिर्भवे,दुत्क्रममौर्विकायाः । =त्रि$^{\text{२}}$−( त्रि$^{\text{२}}$−२त्रि·ज्याउ+ज्याउ$^{\text{२}}$ )=२त्रि·ज्याउ−ज्याउ$^{\text{२}}$,

इतो युता सा द्विगुणोत्क्रमज्यात्रिज्याहतिस्तत्पदमण्डसिद्धयै । पूर्ण$^{\text{२}}$= क्रमा$^{\text{२}}$+ज्याउ$^{\text{२}}$=२त्रि·ज्याउ ।

तदद्रिमूलं परिगृह्य पूर्वप्रकारसिद्धो गदितो द्वितीयः ।
"त्रिज्योत्क्रमज्या निहतेर्दलस्य मूलस्वरूपानयनप्रकारः" ॥

अथ लघुखण्डवशाज्ज्यानयने मुनीश्वरोपरि साक्षेपमाह—

सुसूक्ष्मखण्डानि विहाय तस्यान्तरस्थसुस्थूलजखण्डकेषु ॥
प्रकारयोर्ये समतां प्रकर्त्तुं समुद्यतास्ते परिवर्जनीयाः ।
यतः कलापञ्चकजज्यकार्धेऽगर्भेऽज्यका तुल्यविधौ तदीया ॥

**वा. भा.** सुसूक्ष्मखण्डानि "तत्त्वाश्विन" इत्यादिसिद्धानि विहाय मुक्त्वा, तस्य किन्त्विष्टचापस्यान्तरे मध्ये स्थितानि यानि दशदशलवमितानि स्थूलखण्डानि तेषु, तद्वशत इत्यर्थः । ये मुनीश्वराः प्रकारयोर्लघुज्याबृहज्ज्यानयनप्रकारयोः समतां तुल्यफलजनकतां प्रकर्त्तुं समुद्यतास्ते परिवर्जनीयाः नानुमोदनीया अर्थात्तद्विधिरनादरणीयः । यतस्तुल्यविधौ विचारे तावत् कलापञ्चकजज्यकार्धे, तदीया किन्तुकलापञ्चकीया अर्धज्यका भवति अर्थाद्बृहज्ज्या प्रकारानीतपञ्चकलाज्यार्धमिता लघुज्याप्रकारागतज्या भवतीति प्रत्यक्षबाधो हि महादूषणम् ।

अथ प्रतीत्यर्थं गणितेनोच्यते । यथा कलापञ्चकमितमिष्टचापं प्रकल्प्य ततः "यातैष्ययोः खण्डकयोर्विशेषः"—इत्यादिना स्पष्टभोग्यखण्डम् =

$=\frac{\text{ग·खं}+\text{ऐ·खं·}}{२}-\frac{\text{शे (गखं}-\text{ऐखं)}}{२०}$ । अत्र $\because$ ग·खं·=८०।शे·कं·=५′ $=\frac{१}{१२}$

$\therefore$ स्प·भो·खं· $=\frac{२१}{२}-\frac{१\times२१}{१२\times२०}=\frac{२१}{२}-\frac{७}{८०}=\frac{८३३}{८०}$, अथ ततः ज्या५′=

$=\frac{\text{स्प·भो·खं}\times\text{शे·अं·}}{१०}=\frac{८३३\times१}{१०\times८०\times१२}=\frac{८३३}{९६००}$ । परन्तु मुनीश्वरमते त्रि=१९१

$\therefore$ तद्व्यासार्धे ज्या५′ $=\frac{८३३\times१९१}{९६००\times१२०}=\frac{१५९१·३'}{९६००\times१२०}=००|८|१७$

=००।८।२० स्वल्पान्तरात् । इयं वास्तवायाः कलापञ्चकज्यायाः

(१६।४०) अस्या अर्धमिता अतो लघुज्यया ज्यानयनं नहि युक्तियुक्तमिति भट्टाशयः।

अथ कथं ज्या५′=१६।४० तदुच्यते, तत्र बृहज्ज्यया

ज्या ५′ $= \frac{२२५' \times ५'}{२२५'} = ५'$, इयं मुनीश्वरव्यासार्धे परिणामिता तदा ज्या५′=

$= \frac{५ \times १९१}{३४३८} = \frac{९५५}{३४३८} =$ ००।१६।४०, इयं युक्तियुक्ता।

परन्तु मन्मते भट्टोक्तखण्डनं समीचीनं नास्ति। यतो लघुज्याविधिनाऽपि समीचीनैव जीवाऽऽयाति तत्र। यथोच्यते। पूर्वं गतखण्डं किं नाम तद्विचार्यते। गतज्यायां तत्पूर्वज्यां विशोध्य यदवशिष्टं तदेव गतखण्डशब्देन कथ्यते। तेन दशांशाल्पेष्टचापेऽपि गतज्या=०। तत्पूर्वज्या=२१, चतुर्थपदगतःवाद्दणात्मिकाऽस्ति। तेन गखं=०—२१′= + २१, तथा ऐ·खं·=२१

स्प·भो·खं· $= \frac{२१+२१}{२} - \frac{१}{५} \times \frac{००}{२०} =$ २१। अतः ज्या ५′ $=$

$\frac{१}{१२} \times \frac{२१}{१०} = \frac{७}{४०}$।

तदा १९१ व्यासार्धे ज्या५′ $= \frac{७ \times १९१}{४० \times १२०} = \frac{१३३७}{४८००}$

=०० । १६ । ४०

अतो मुनीश्वरमतेनापि सम्यक् फलम्। अत्र कैश्चित् स्पष्टभोग्यखण्डस्वरूपमात्रमप्यसमीचीनमेवानीतम्। ततः किं फलितमित्यपि न प्रदर्शितम्।"

**प्र. का.** अथ तृतीयांशज्यानयने तु पूर्वोक्तत्रिगुणितभुजांशानां ज्यास्वरूपम्=ज्या ३ भुं= $\frac{३त्रि·ज्याभुं·ज्याभुं^{३}}{त्रि}$ ।अथ केवलभुजांशज्याज्ञानार्थमिद-

मेव ज्ञातभुजांशज्यास्वरूपं कल्प्यम्। $\left(\text{अर्थात् } ३\text{भु}=\text{भु}, \text{तदा}, \text{भु}=\frac{\text{भु}}{३}=\text{या}१\right)$

ऐवमभुजांशज्यास्वरूपं तु ज्ञातभुजांशतृतीयांशज्यारूपं, तथा सतिज्ञात भुजांशज्ययेदं सममिति समच्छेदीकृत्य, छेदापगमे च कृते, जातौ समपक्षौ

$$=\text{ज्याभु}=\frac{३\text{त्रि}^{२}\cdot\text{ज्याभु}'-४\text{ज्या}^{३}\text{भु}'}{\text{त्रि}^{२}} \therefore \text{त्रि}^{२}\times\text{ज्याभु}'=३\text{त्रि}^{२}\cdot\text{ज्या}\tfrac{१}{३}\text{भु}\ ४\text{ज्या}^{३}\tfrac{१}{३}\text{भु}$$

$$\text{वा}\qquad \text{त्रि}^{२}\cdot\text{ज्याभु}=३\ \text{त्रि}^{२}\cdot\text{या}-४\text{या}^{३}$$

अत्र चतुर्भागव्यक्तघनं पक्षयोः प्रक्षिप्य, तौ त्रिघ्नेन त्रिज्यावर्गेण हृतौ कृत्वा जातमाद्यपक्षे अ१ = या १। तत्रामेऽपरपक्षे $\frac{\text{त्रि}^{२}\cdot\text{ज्याभु}'+४\ \text{या}^{३}}{३\text{त्रि}^{२}}=\text{या}\ १$ तु व्यक्तखण्ड ज्याऽ्यंशमितं सिद्धम्। अव्यक्तखण्डे त्र्यंशज्याघनाऽभिघातः त्रिज्यावर्गहतस्त्रिभक्तश्च। तत्र ज्याऽ्यंश ( या १ ) त्र्यंशज्यामानं स्थूलं प्रथमं प्रकल्प्य तद्घनत्रिज्यावर्गहृतं स्वत्र्यंशयुतो ज्याऽ्यंशे योजितं सूक्ष्मासन्नं स्थूलं त्र्यंशज्यामानं स्यात्, पुनरेव तस्य घनादिना ज्ञातं ज्याऽ्यंशज्यैवासकृत् स्फुटा तृतीयांशज्या स्यादित्युपपन्नं ( दोर्ज्यात्रिभागस्य घनमित्यादि दोर्ज्या-त्रिभागत्रिलवज्यका स्यादित्यन्तम् )। ( श्लो ८१ + ८२ )।

चतुर्थांशज्याज्ञाने तु चतुर्गुणितभुजांशानां ज्यास्वरूपमिदं $\frac{४\text{का}^{३}\cdot\text{भु}-४\text{भु}^{३}\cdot\text{को}}{\text{त्रि}^{३}}=\text{ज्या}४\text{भु}$, इदं वा $=\frac{४\text{त्रि}^{२}\cdot\text{को}\ \text{भु}-८\text{भु}^{३}\text{को}}{\text{त्रि}^{३}}$।

अत्र भुजज्या चतुर्थांशज्येति पक्षोऽयं ज्ञातज्यासम इति यथोक्तवत् समपक्षौ त्रिज्यापवर्तितौ च जातौ $\left(\because ४\text{भु}=\text{भु}\ \therefore \text{भु}=\frac{\text{भु}'}{४}=\text{च}, \text{तदा}\right.$

$$\left.\text{ज्याभु}'=\frac{४\text{ज्याच}\times\text{को}\cdot\text{त्रि}^{२}-८\text{को}\ \text{ज्या}^{३}\text{च}}{\text{त्रि}^{३}}\right)$$

$$\therefore \text{त्रि}^{२}\cdot\text{ज्याभु}'=\frac{४\text{ज्याच}\cdot\text{को}\ \text{त्रि}^{२}-८\text{को}\ \text{ज्या}^{३}\text{च}}{\text{त्रि}}=$$

$\frac{\text{२ज्याच}\cdot\text{को}\cdot}{\text{त्रि}}(\text{२त्रि}^{२}\cdot-\text{४ज्या}^{२}\text{च})$। अत्र $\frac{\text{२ज्याच}\times\text{को}}{\text{त्रि}}=$ गुणः।तदा, $\text{त्रि}^{२}\cdot\text{ज्याच}$

$=\text{गु}\ (\text{२त्रि}^{२}-\text{४ज्याच}^{२})\ \therefore\ \frac{\text{त्रि}^{२}\cdot\text{ज्याच}}{\text{गु}}=\text{२त्रि}^{२}-\text{४ज्याच}$

$\therefore\ \text{४ज्या}^{२}\text{च}=\text{२ त्रि}^{२}-\frac{\text{त्रि}^{२}\cdot\text{ज्याच}}{\text{गु}}=\text{शे}\ \therefore\ \text{ज्याच}=\frac{\sqrt{\text{शे}}}{\text{२}}$

अत्र चतुर्थांशज्यातत्कोटिज्याद्विघ्नघातस्त्रिज्याभक्तस्तद्द्विगुणांशज्यामानमिति पूर्वं निर्णयात् प्रकृते तत् तु ज्ञातभुजांशानामर्धज्यामानं स्यात्। तेन तद्गुणःपक्षोऽयं '२त्रि$^{२}$—४च$^{२}$'त्रिज्यावर्गज्ञातज्याघातसम इति तद्गुणभक्त एव त्रिज्यावर्गो ज्यागुणः फलं केवलतत्पक्षसमम्। तत्र समशोधनेन द्विगुणे त्रिज्यावर्गे तत्फलं विशोध्य शेषस्य मूलार्धं चतुर्थांशस्य ज्येत्युपपन्नं यथोक्तम्।

अथ पञ्चमांशज्याज्ञाने च पञ्चगुणितभुजांशानां ज्यास्वरूपं=ज्या५भु $=\frac{\text{भु}^{५}\text{१}+\text{को}^{४}\cdot\text{भु}-\text{भु}^{३}\cdot\text{को}^{२}\text{१०}}{\text{त्रि}^{४}}$, भुजज्यावर्गोनत्रिज्यावर्गःकोटिज्यावर्ग इतिकोटिज्यावर्गस्वरूपमुत्पाद्यैवं वा तत्स्वरूपं $\frac{\text{भुघ}\cdot\text{त्रिव२०}\ \text{त्रिवव}\cdot\text{भु५}+\text{भुघ}\cdot\text{भुव१६}}{\text{त्रिवव १}}$

अत्र पञ्चमांशरूपकेवलभुजज्याज्ञानार्थमिदं ज्ञातज्यासममिति पक्षौ— ज्याज्ञा$\times$त्रिवव१=त्रिवव·पं·५+पघ·पंव१६—त्रिव·पंघ२० समत्वात् तयोः पक्षयोरिदं (२०त्रिव$\times$पंघ-+पंघ$\times$पंव१६) संयोज्य जातौ पक्षौ त्रिवव·पं·५ =पंघ त्रिव२०पंघ·पव१६त्रिवव·ज्या १, पञ्चगुणितेन त्रिज्यावर्गवर्गेण भजने ऊर्ध्वपंक्त्या पञ्चमांशज्यैव, अधःस्थिते तत्तुल्यपक्षे तु व्यक्तखण्डे ज्ञातज्यापञ्चमांशः सिद्धः।

अत्र पूर्वं स्थूलत्वेन ज्यापञ्चमांशमेव पञ्चमांशज्यां प्रकल्प्य प्रथमाव्यक्तखण्डे आद्यसंज्ञ उपपन्नो,—द्वितीयाव्यक्तखण्डे रन्यसंज्ञ उपपन्न इति। तयोर्धनर्णयोरन्तरयुक्तो ज्यापञ्चमांशः स्यात् पुनरमुं पञ्चमांशज्यास्वरूपं प्रकल्प्याद्यान्यद्वारा स्फुटो ज्यापञ्चांश इत्यसकृत् स्थिरो ज्यापञ्चमांशः पञ्चमांशज्येत्युपपन्नं भुजांशकानामित्याद्युक्तम्॥

अथ द्विघ्नभुजांशकोटिज्यानयनम्—

यद्बाहुकोटिज्यकयोश्च वर्ग-
वियोगमानं त्रिभजीवयाऽऽप्तम् ।
नूनं च तत्कोटिगुणस्य मानम्
द्विसंगुणानां च तदंशकानाम् ॥ ६० ॥

अत्रोपपत्ति ।

भुअ=अफ=फग ∴ २भुअ=अग । ∴
२भुको=गड ∴ ज्या२भु=गल, कोज्या२भु=
लके=गइ, तथा च उज्या२भु=अल ।

अथ केघअ, गअल त्रिभुजयो साजात्यात्

$$\text{अल}=\frac{\text{अघ}\times\text{गअ}}{\text{फअ}}=\frac{\text{ज्याअ}\times\text{२ज्याअ}}{\text{त्रि}}=\frac{\text{२ज्यां}^{\text{२}}\text{अ}}{\text{त्रि}}=\text{उज्या२भु}$$

$$\therefore \text{कोज्या२भु}=\text{अके}-\text{अल}=\text{लके}=\text{त्रि}-\frac{\text{२ज्यां}^{\text{२}}\text{अ}}{\text{त्रि}}=\frac{\text{त्रि}^{\text{२}}-\text{२ज्या}^{\text{२}}\text{अ}}{\text{त्रि}}$$

$$=\frac{\text{त्रि}^{\text{२}}-\text{ज्या}^{\text{२}}\text{अ}-\text{ज्या}^{\text{२}}\text{अ}}{\text{त्रि}}=\frac{\text{को}^{\text{२}}\text{ज्या}^{\text{२}}\text{अ}-\text{ज्या}^{\text{२}}\text{अ}}{\text{त्रि}},$$ अत उपपन्नं सर्वम् ॥

अथेष्टांशदलकोटिज्यानयनम्—

यत्कोटिजीवादलसंयुतैक-
राशिज्यकायास्त्रिगुणाहतायाः ।
पदं तु तद्भागदलस्य कोटि-
ज्यकाऽवगम्या सुधियाऽत्र नूनम् ॥६१॥

अत्रोपपत्ति ।

"त्रिज्योत्क्रमज्याविहतेर्दलस्य"—इत्यादिना $\text{ज्या}\frac{\text{१}}{\text{२}}\text{चा}=\sqrt{\frac{\text{त्रि उज्याचा}}{\text{२}}}$

$$\therefore \text{कोज्या}\frac{\text{१}}{\text{२}}\text{चा}=\sqrt{\text{त्रि}^{\text{२}}-\text{ज्या}^{\text{२}}\frac{\text{१}}{\text{२}}\text{चा}}=\sqrt{\text{त्रि}^{\text{२}}-\frac{\text{त्रि. उज्या चा}}{\text{२}}}.$$

$$=\sqrt{\frac{२\ \text{त्रि}^2-\text{त्रि}\ \text{उज्या चा}}{२}}=\sqrt{\frac{\text{त्रि}^2+\text{त्रि}^2-\text{त्रि}\cdot\text{ज्या उ चा}}{२}}$$

$$=\sqrt{\frac{\text{त्रि}\,(\text{त्रि}+\text{त्रि}-\text{ज्या उ चा})}{२}}=\sqrt{\frac{\text{त्रि}\,(\text{त्रि}+\text{को ज्या चा})}{२}}$$

$$=\sqrt{\text{त्रि}\left(\frac{\text{त्रि}}{२}+\frac{\text{को ज्या चा}}{२}\right)}$$

$$=\sqrt{\text{त्रि}\left(\text{ज्या }३०+\frac{\text{को ज्या चा}}{२}\right)}$$ अत उपपन्नं सर्वम् ॥

अथ त्रिंशत्पञ्चचत्वारिंशद्दशज्या आह—

**त्रिज्यादलं त्वग्निलवज्यका स्यात्**
**तत्कोटिजज्या च खषड्लवज्या ।**
**वर्गार्धमूलं त्रिभमौर्विकाया**
**जीवा भवेत् पञ्चकृतांशकानाम् ॥ ६० ॥**

अत्रोपपत्तिः ।

वृत्ते तु पतिसमषड्भुजक्षेत्रे भुजमानस्य व्यासार्धसमत्वात्,

$\text{पू ज्या }६० = \frac{१}{२}\text{व्या}$ ∴ $\frac{\text{पू ज्या चा}}{२}=\text{ज्या }\frac{१}{२}\text{चा}$ ∴ $\text{ज्या }३०=\frac{\text{व्या}}{४}=\frac{१}{२}\text{त्रि}$,

$\sqrt{\text{त्रि}^2-\text{ज्या}^2\ ३०}=\text{ज्या }६०=\sqrt{\text{त्रि}^2-\frac{१}{४}\text{त्रि}^2}=\sqrt{\frac{३}{४}\text{त्रि}^2}$ ।

तथा च नवत्यंशचापपूर्णज्या कर्णः । त्रिज्यामितौ भुजौ । तत्र नवत्यंशपूर्णज्या तु द्विगुणशरव्यासार्धव्यासमा भवति । तेन $\text{पू ज्या}^2\ ९०=२\text{त्रि}^2$

∴ $\text{पू ज्या }९०=\sqrt{२\ \text{त्रि}^2}$

$$\frac{\text{पू ज्या }९०}{२}=\text{ज्या }४५=\frac{\sqrt{२\text{त्रि}^2}}{२}=\sqrt{\frac{२\text{त्रि}^2}{४}}=\sqrt{\frac{\text{त्रि}^2}{२}}$$

अत उपपन्नं सर्वम् ॥

अथ द्विघ्नभुजांशकोटिज्यानयनम्—

यद्बाहुकोटिज्यकयोश्च वर्ग-
वियोगमानं त्रिभजीवयाऽऽप्तम् ।
नूनं च तत्कोटिगुणस्य मानम्
द्विसंगुणानां च तदंशकानाम् ॥ ९० ॥

अत्रोपपत्तिः ।



भुअं=अक=कग ∴ २भुअ=अग । ∴ २भुको=गउ ∴ ज्या२भु=गल, कोज्या२भु=लके=गइ, तथा च उज्या२भु=अल ।

अथ केघअ, गअल त्रिभुजयोः साजात्यात्

$$\text{अल}=\frac{\text{अघ}\times\text{गअ}}{\text{केअ}}=\frac{\text{ज्याअ}\times\text{२ज्याअ}}{\text{त्रि}}=\frac{\text{२ज्या}^{2}\text{अ}}{\text{त्रि}}=\text{उज्या२भु}$$

$$\therefore \text{कोज्या२भु}=\text{अके}-\text{अल}=\text{लके}=\text{त्रि}-\frac{\text{२ज्या}^{2}\text{अ}}{\text{त्रि}}=\frac{\text{त्रि}^{2}-\text{२ज्या}^{2}\text{अ}}{\text{त्रि}}$$

$$=\frac{\text{त्रि}^{2}-\text{ज्या}^{2}\text{अ}-\text{ज्या}^{2}\text{अ}}{\text{त्रि}}=\frac{\text{कोज्या}^{2}\text{अ}-\text{ज्या}^{2}\text{अ}}{\text{त्रि}},$$ अत उपपन्नं सर्वम् ॥

अथेष्टांशदलकोटिज्यानयनम्—

यत्कोटिजीवादलसंयुतैक-
राशिज्यकायास्त्रिगुणाहतायाः ।
पदं तु, तद्भागदलस्य कोटि-
ज्यकाऽवगम्या सुधियाऽत्र नूनम् ॥९१॥

अत्रोपपत्तिः ।

"त्रिज्योत्क्रमज्यानिहतेर्दलस्य"—इत्यादिना $\text{ज्या}\frac{1}{2}\text{चा}=\sqrt{\frac{\text{त्रि.उज्याचा}}{2}}$

$$\therefore \text{कोज्या}\frac{1}{2}\text{चा}=\sqrt{\text{त्रि}^{2}-\text{ज्या}^{2}\frac{1}{2}\text{चा}}=\sqrt{\text{त्रि}^{2}-\frac{\text{त्रि.उज्या चा}}{2}}$$

$$=\sqrt{\frac{\text{२ त्रि}^{२}-\text{त्रि}\cdot\text{उज्याचा}}{\text{२}}}=\sqrt{\frac{\text{त्रि}^{२}+\text{त्रि}^{२}-\text{त्रि}\cdot\text{ज्याउचा}}{\text{२}}}$$

$$=\sqrt{\frac{\text{त्रि}(\text{त्रि}+\text{त्रि}-\text{ज्या उ चा})}{\text{२}}}=\sqrt{\frac{\text{त्रि}(\text{त्रि}+\text{को ज्या चा})}{\text{२}}}$$

$$=\sqrt{\text{त्रि}\left(\frac{\text{त्रि}}{\text{२}}+\frac{\text{को ज्या चा}}{\text{२}}\right)}$$

$$=\sqrt{\text{त्रि}\left(\text{ज्या ३०}+\frac{\text{को ज्या चा}}{\text{२}}\right)}$$ अत उपपन्नं सर्वम् ॥

अथ त्रिंशत्षष्टिपञ्चचत्वारिंशदंशज्या आह—

**त्रिज्यादलं त्र्यग्निलवज्यका स्यात्**
**तत्कोटिजज्या च खषड्लवज्या ।**
**वर्गार्धमूलं त्रिभमौर्विकाया-**
**जीवा भवेत् पञ्चकृतांशकानाम् ॥ ६२ ॥**

अत्रोपपत्तिः ।

वृत्तान्तःपातिसमषड्भुजक्षेत्रे भुजमानस्य व्यासार्धसमत्वात्,

$\text{पूज्या ६०}=\frac{१}{२}\text{व्या}\;\therefore\;\frac{\text{पूज्या चा}}{\text{२}}=\text{ज्या}\frac{१}{२}\text{चा}\;\therefore\;\text{ज्या ३०}=\frac{\text{व्या}}{\text{४}}=\frac{१}{२}\text{त्रि},$

$\sqrt{\text{त्रि}^{२}-\text{ज्या ३०}}=\text{ज्या ६०}=\sqrt{\text{त्रि}^{२}-\frac{१}{४}\text{त्रि}^{२}}=\sqrt{\frac{३}{४}\text{त्रि}^{२}}$ ।

तथा च नवत्यंशचापपूर्णज्या कर्णः । त्रिज्यामितौ भुजौ । तत्र नवत्यंशपूर्णज्या तु द्विगुणशरवेदांशज्यासमा भवति । तेन $\text{पूज्या}^{२}\text{ ९०}=\text{२त्रि}^{२}$

$\therefore\;\text{पूज्या ९०}=\sqrt{\text{२ त्रि}^{२}}$

$$\frac{\text{पूज्या ९०}}{\text{२}}=\text{ज्या ४५}=\frac{\sqrt{\text{२त्रि}^{२}}}{\text{२}}=\sqrt{\frac{\text{२त्रि}^{२}}{\text{४}}}=\sqrt{\frac{\text{त्रि}^{२}}{\text{२}}}$$

अत उपपन्नं सर्वम् ॥

अथ भुजोननवत्यंश-भुजयुग्नवत्यंशयोर्दलज्ये आह—

दोर्ज्यात्रिभज्याहतियुक्तहीने
त्रिज्याकृती, तद्दलतः पदे ये ।
भुजेन युग्हीनगृहत्रयस्य
दलोत्थजीवे भवतः क्रमात् ते ॥ ९३ ॥

अत्रोपपत्ति ।



यथा भु. अं=अघ=घइ ∴ ९०−भुअं=कघ, तथा ९० + भुअं=कइ अथ 'कअग' त्रिभुजे कअ=पूज्याअकचा, =२ज्या$\frac{1}{2}$अकचा,

तत्र $\text{कअ} = \sqrt{\text{कग}^2 + \text{गअ}^2} = \sqrt{(\text{कके} - \text{गके})^2 + \text{गअ}^2}$

$= \sqrt{(\text{त्रि} - \text{ज्याभु})^2 + \text{कोज्या}^2\text{भु}} =$

$\sqrt{\text{त्रि}^2 - 2\,\text{त्रि} \times \text{ज्याभु} + \text{ज्या}^2\text{भु} + \text{कोज्या}^2\text{भु}}$

$= \sqrt{2\,\text{त्रि}^2 - 2\,\text{त्रि ज्याभु}}$ ∴ $\text{ज्या}\frac{1}{2}\text{अकचा} = \frac{\text{अक}}{2} =$

$\frac{1}{2}\sqrt{2\,\text{त्रि}^2 - 2\,\text{त्रि}\cdot\text{ज्याभु}} = \sqrt{\frac{\text{त्रि}^2 - \text{त्रि}\cdot\text{ज्याभु}}{2}} = \text{ज्या}\frac{1}{2}(90 - \text{भु})$

एवम्, $\text{ज्या}\frac{1}{2}(90 + \text{भु}) = \frac{1}{2}\text{कइ} = \frac{1}{2}\sqrt{(\text{कके} + \text{केन})^2 + \text{नइ}^2} =$

$= \frac{1}{2}\sqrt{(\text{त्रि} + \text{ज्याभु})^2 + \text{कोज्या}^2\text{भु}}$

$= \sqrt{\frac{\text{त्रि}^2 + 2\,\text{त्रि}\cdot\text{ज्याभु} + \text{ज्या}^2\text{भु} + \text{कोज्या}^2\text{भु}}{4}} =$

$= \sqrt{2\,\text{त्रि}^2 + \frac{2\,\text{त्रि}\cdot\text{ज्याभु}}{4}} = \sqrt{\frac{\text{त्रि}^2 + \text{त्रि}\cdot\text{ज्याभु}}{2}} = \text{ज्या}\frac{1}{2}(90 + \text{भु})$,

अत उपपन्नम् ।

अथ भुजांशान्तरदलज्यामाह—

कोटिज्ययोर्दोर्ज्ययोश्च ये चा-
न्तरे तयोर्वर्गजयोगमूलम् ।

तदर्धतुल्या भुजयोर्वियोग-
खण्डस्य जीवा भवतीह नूनम् ॥ ९४ ॥

अत्रोपपत्ति ।



अत्रैक चापम्=कग, तज्ज्या=कल, कोज्या=कच
तथाऽन्यच्चापम्=गध, तज्ज्या=अक, कोज्या=अत्र
∴ कोटिज्यान्तरम्=कत, दोर्ज्यान्तरम्=अत,
अत्र $\text{अत}^2+\text{तक}^2=\text{अरक}^2$
∴ $\sqrt{\text{अत}^2+\text{तक}^2}=\text{अरक}$=इय गक, गक
भुजांशयोर्वियोगपूर्णज्या, अस्या अर्धं तदर्धज्येति सर्वमुपपन्नम् ॥

अथ दोःकोटिभागान्तरज्यामाह—

दोःकोटिजीवान्तरवर्गखण्डात्
मूलेन तुल्या सुधियाऽत्र वेद्या ।
दोःकोटिभागान्तरखण्डजीवाम्
वदेऽथ मूलग्रहणं विनाऽपि ॥ ९५ ॥

अत्रोपपत्तिः ।

द्रष्टव्यं पूर्वक्षेत्रम् । अत्र भुजांशा =कग ∴ कोट्यंशा =कन
अथ कन=गध कार्यम् ।
∴ को—भु=धक
तत्र ज्याभु=कल=अघ, कोज्याभु=यम=कच
∴ अत=कत=कोज्याभु—ज्याभु
ततः $\text{अत}^2+\text{तक}^2=2\text{तक}^2=2(\text{कोज्याभु}-\text{ज्याभु})^2=\text{अक}^2$
पूज्या(को—भु)=अक=$\sqrt{(\text{कोज्याभु}-\text{ज्याभु})^2}$

∴ ज्या(को—भु)$=\dfrac{\text{पूज्या (को—भु)}}{2}=\frac{1}{2}\sqrt{2(\text{कोज्याभु}-\text{ज्याभु})^2}$

$=\dfrac{\sqrt{(\text{कोज्याभु}-\text{ज्याभु})^2}}{2}$ अत उपपन्नम् ॥

अथ दो कोट्यन्तराख्यज्यामाह—

**द्विसंगुणो वाहुगुणस्य वर्ग-**
**स्त्रिज्योद्धृतो,—वाऽन्तरिता फलेन ।**
**त्रिज्यैव, दोःकोटिलवान्तरज्या**
**स्यात्कल्पनेयं बहुधा स्वबुद्ध्या ॥ ९६ ॥**

अत्रोपपत्ति ।

अत्र भुजांशा =भु, तदा भुजकोट्यंशा =९०—भु

तर्हि $\left\{(\text{९०}-\text{भु})\sim\text{भु}\right\}=\text{को}\sim\text{भु}.\cdot\ \text{ज्या}\left\{(\text{९०}-\text{भु})\sim\text{भु}\right\}=$

$=\dfrac{\text{ज्या}(\text{९०}-\text{भु})\ \text{कोज्याभु}-\text{ज्याभु}\cdot\text{कोज्या}(\text{९०}-\text{भु})}{\text{त्रि}}=\dfrac{\text{कोज्या}^{2}\text{भु}-\text{ज्या}^{2}\text{भु}}{\text{त्रि}}$

$=\dfrac{\text{त्रि}^{2}-\text{ज्या}^{2}\text{भु}-\text{ज्या}^{2}\text{भु}}{\text{त्रि}}=\dfrac{\text{त्रि}^{2}-\text{२ज्या}^{2}\text{भु}}{\text{त्रि}}=\text{त्रि}-\text{२}\dfrac{\text{ज्या}^{2}\text{भु}}{\text{त्रि}}$ । अत उपपन्नम्

**द्विघ्नांशकोटिजीवा वा बाहुकोट्यन्तरज्यका ।**
**फलमेषोदितं यस्मात् द्विघ्नांशोत्क्रमशिञ्जिनी ॥ ९७ ॥**

अत्रोपपत्ति । यथा ग अ=ग क=भु, ∴ २भु= अक, तथा गत=भुको, ∴ कत=भुको—भु ∴ ज्या (भुको—भु)=रर, वा ∵ २भु=अक ∴ ९०—अक=कत=९०—२भु । तेन



ज्या (९०—२ भु)=क त, अस्मात् द्विघ्नभुजांशकोटिज्या, भुजकोट्यन्तरज्यया समेति सिद्धम् ∴ उज्या२ भु=त्रि—कोज्या२भु=त्रि—$\dfrac{\text{२ ज्या}^{2}\text{भु}}{\text{त्रि}}$

इति सर्वमुपपन्नम् ।

( अथ राशित्रयज्योपपत्तिः । )

अत्रोपपत्तिं शृणु, यावदेक राशिज्यकामानमिह प्रकल्प्य ।
त्रिज्या न्यूना द्विगुणेनान्त्यया, शेषार्धजीवानयनप्रकारान् ॥

अत्रैकराशेर्भवति व्यक्तया वर्गः, स चाव्यक्तकृते समानः ।
कृते समच्छेदकयोर्विनाशे, समे विशुद्धे च, समौ च पक्षौ ॥
अष्टाहतौ तौ, त्रिगुणस्य कृत्या युतौ, पुनस्तावपि तुल्यपक्षौ ।
समौ च मूलग्रहणादपीमौ, त्वव्यक्तमान समशोधनेन ॥
त्रिभज्यकार्धं भवतीह, तेनार्धिता त्रिभज्या खगुणांशजीवा ।

( अथैतत्पद्योक्त्या क्रिया विवरणम् । )

$\text{ज्या ३० = या १}$

$\text{त्रि − या १ = उ ज्या ६०}$

$$\frac{\text{त्रि ( त्रि − या १ )}}{२} = \text{ज्या}^{२}\ \text{३० = या}^{२}\ \text{१}$$

$$\frac{\text{त्रि}^{२} - \text{त्रि·या १}}{२} = \text{या}^{२}\ \text{१}$$

$\therefore\ \text{त्रि}^{२} - \text{त्रि या १ = २या}^{२}$

$\text{त्रि}^{२} = \text{२ या}^{२} + \text{त्रि·या १}$

$\text{८ त्रि}^{२} = \text{१६या}^{२} + \text{त्रि·या ८}$

$\text{९ त्रि}^{२} = \text{१६ या}^{२} + \text{त्रि या ८} + \text{त्रि}^{२}$

$\text{३ त्रि = ४ या + त्रि}$

$$\frac{\text{२ त्रि}}{४} = \frac{\text{त्रि}}{२} = \text{या१}$$ अत उपपन्न सर्वम् ।

वृत्ते षडस्रीयभुजस्तु वृत्त व्यासार्धतुल्योऽथ तदर्धकं वा ॥
स्पष्टमेतत् क्षेत्रमितिविदाम् ।

( अथ पञ्चचत्वारिंशदंशाना ज्योपपत्ति । )

शरेन्दुसंख्यानां च समे दो कोटिजज्यके ।
त्रिज्याकर्णः, स तद्द्विवर्गमूलसमो यत ॥
अतो विलोमतस्त्रिज्यावर्गार्धपदमेव सा ।
गृहीता सार्धराशिज्या, तत्कोटिज्या च धीमता ॥

या भा ( अत्र तथाऽपि ६२ श्लोके प्रतिपादितम् । )

अथ भुजांशयोरन्तरांशदलज्योपपत्तिमाह—

वृत्ते ॥ तन्मध्यगसूत्रतश्च तिर्यग्भुजज्ये सुधियैकपार्श्वे ।
तत्कोटिजीवे च तदग्रकाभ्यां कार्ये, तु दोर्ज्यान्तरमत्र बाहुः ॥
कोटिज्ययोरन्तरकं च कोटिस्तयोश्च यद्वर्गजयोगमूलम् ।
कर्णस्तदर्धं भुजयोर्वियोगखण्डस्य जीवेत्युपपन्नमत्र ॥

वा० भा० अनयोपपत्तिरुक्तैव पूर्वम् । किमत्र पुनः पिष्टपेषणेनेति ॥

अथ दो कोटयोरन्तरार्धज्योपपत्तिः ।

म० का० "एवं कोटिज्यां च दोर्ज्यां प्रकल्प्य तज्ज्यादोर्ज्याभ्यां च पूर्वप्रकारात् ।
बाह्वोर्या स्यादन्तरार्धस्य जीवा, दो कोटयोः स्यादन्तरार्धस्य सा ज्या ॥
दोर्ज्याकोटिज्यान्तरेणैव तुल्ये तत्र स्यातां बाहुकोटी हि, कर्णः ।
दो.कोटयुत्थज्यान्तरस्यैव वर्गात् द्विघ्नान्मूलं तस्य खण्डज्यका,ऽतः ॥
द्विघ्नाद्वर्गादेव वेदांशमूलं, साम्यात् कृत्वा चोपपन्नं यथोक्तम् ।
पूर्वं प्रोक्ता भावना याऽन्तरोत्था, तदीत्यैव बाहुकोटयन्तरज्या ॥

यथा दोर्ज्याकोटिज्ये भु१, को१ अत्र कोटिज्यां दोर्ज्यां, तथा दोर्ज्यां च कोटिज्यां प्रकल्प्य अन्तरभावनार्थं न्यासः $\left\{ \begin{matrix} \text{भु १} , & \text{को१} \\ \text{को१} , & \text{भु१} \end{matrix} \right\}$

उत्पद्यते दो कोटयन्तरज्या $= \dfrac{\text{को}^2 - \text{भु}^2}{\text{त्रि}}$, भुजज्यावर्गोनस्य त्रिज्यावर्गस्य कोटिज्यावर्गत्वादियं वा $\dfrac{\text{त्रि}^2 - \text{२भु}^2}{\text{त्रि}}$ अत्र धनखण्डे त्रिज्यया हृते लब्धं त्रिज्यैव ऋणखण्डे तु भुजज्यावर्गो द्विघ्नस्त्रिज्याभक्त इत्युपपन्नं यथोक्तम् ।"

वा० भा० अत्र पद्योक्तविषये तर्कम् ।



∵ अन=भु० ∴ घक=भुरो, अत्र कघ=अग
∴ ज्याभु=कर=गप, कोज्याभु=गत=दन
गत−कर=गद=कोज्याभु−ज्याभु
एवं कन−गन=कद=कोज्याभु−ज्याभु

$\because$ गद=कद $\therefore$ $२गद^{२}+=गफ^{२}=२\,(कोज्याभु-ज्याभु)^{२}$

$\therefore गफ=\sqrt{२\,(कोज्याभु-ज्याभु)^{२}}=२\,ज्या\,\frac{१}{२}\,(को-भु)$

$\therefore ज्या\frac{१}{२}(को-भु)=गफ\frac{१}{२}=\frac{१}{२}\sqrt{२\,(कोज्याभु-ज्याभु)^{२}}$

$=\sqrt{\frac{२(कोज्याभु-ज्याभु)^{२}}{४}}=\sqrt{\left(\frac{कोज्याभु-ज्याभु}{२}\right)^{२}}$ अत उपपन्नम्।

इषुं युगाञ्जाः गगनेन्दुयुक्च
रूपात्मकः सावयवो गुणोऽयम्।२।१४।१०।
त्रिज्या गुणघ्नीह पृथग्युतोना
त्रिभज्यया, वेदहृताऽऽथलब्धम् ॥९८॥
ज्या स्याच्चतुष्पञ्चमितांशकानाम्,
द्वितीयमष्टादशभागकानाम् ।
क्रमात् तयोः कोटिगुणौ रसाग्नि-
त्रिसप्ततुल्यांशकयोर्ज्यके स्तः ॥९९॥

वा॰भा॰ अत्र युक्तिः ।

$ज्या\,५४=\frac{\sqrt{त्रि^{२}\cdot५}+त्रि}{४}=\frac{त्रि\sqrt{५}+त्रि}{४}$ अत्र $\because \sqrt{५}$

$=२।१४।१०=गुणः।\therefore ज्या५४=\frac{त्रि\times गुण+त्रि}{४}\ldots।$

अथ $ज्या१८=\frac{\sqrt{५त्रि^{२}}-त्रि}{४}=\frac{त्रि\sqrt{५}-त्रि}{४}$,

$=\frac{त्रि\times गुण-त्रि}{४}$, अत उपपन्नं सर्वम् ॥

खं, पञ्चरामाः, क्षितिपा, स्तथा खं,
ससेषचो, वेदमिताः, क्रमेण।
रूपात्मकौ सावयवौ गुणौ, तौ
त्रिज्यागुणौ वाऽथ तयोर्ज्यके स्तः ॥१००॥

शून्यं, जिना,-जिना,-स्तिथ्यो,-मुनयो,-गुणकस्त्वयम् ।
तद्गुणा त्रिज्यकैवाऽत्र सूक्ष्मरीत्या जिनज्यका ॥ १०१ ॥

अत्रोपपत्तिः ।

"१८ श्लोकोक्त्याऽत्र ज्या५४= $\frac{\text{त्रि} (\text{गुण} + १)}{४}$ =

त्रि $\frac{(२।१४।१०)}{४}$ = त्रि (००।३५।१६) तथा ज्या १८=

= $\frac{\text{त्रि}\cdot \text{गुण} - \text{त्रि}}{४}$ = $\frac{\text{त्रि} (\text{गुण} - १)}{४}$ = $\frac{\text{त्रि}(२।१४।१०)}{४}$

= त्रि ( ०० । ५७ । ४ ) अत उपपन्नं पूर्वपद्यम् ( १०० ) ॥"

प्र०का०—

"वासनां शृणु सविस्तरामिहाष्टादशांशगुणमप्रकटार्थम् * ।
संविधाय, बुध ! तेन विहीना त्रिज्यका, द्विनगजोत्क्रमजीवा ॥
त्रिज्यया च गुणिता, दलिता स्याद्वर्ग एव रसरामगुणस्य ।
एवमप्रकटमानकृतिर्या, सा हता त्रिभगुणस्य दलेन ॥
तत्कृतिरथ रसरामलवानामुत्क्रमोत्क्रमगुणस्य च वर्गः ।
यौ क्रमोत्क्रमगुणस्य च वर्गौ, तद्युतेः पददलं धृतिजीवा ॥
तेन चाप्रकटमानकृतिर्याऽभ्याहता धृतिसमा नियमात् स्यात् ।
पक्षयोः समहरापगमेऽपि तौ समावृणगताष्टगुणौ च ॥
क्षेपकेण सहितावपि तुल्यौ तत्पदग्रहणतोऽपि समौ तौ ।
तत्र चाद्यपदमन्यपदं हि स्यादिदं च यदि वेदमपीत्यम् ॥
तत्पदद्वयवशात् समशुद्धौ मानमप्रकटजं द्विविधं स्यात् ।
तत्र चाद्यपदमन्यदिदं हि त्रिज्यकापरिमितं हि तदत्र ॥
नोचितं त्रिभगुणाल्पकजीवा तस्य येन नियमेन किलास्ति ।
यस्य कोटिदलजज्यकयाऽत्र स्यात् समा द्विगुणभागजजीवा ॥

* अप्रकटार्थं द्विनवभ्यासमानम् ।

इत्यमत्र नियमोऽप्युभयत्र स्यात्पर प्रकृतयोग्यमिद न ।
अ-यमानमिह तेन गृहीत चाद्यमानममल गणितज्ञै ॥"

( एतच्छ्लोकोक्तया समीकरणविवरणमुच्यते । )

तत्र $\text{ज्या}१८ = \text{ज्यात्र} = \text{या}\ १$

तत $\text{उज्या}७२ = \text{त्रि} — \text{ज्यात्र} = \text{त्रि} — \text{या}\ १$

तत उक्तवत् $\text{ज्या}३६ = \sqrt{\frac{१}{२}\text{त्रि}\ (\text{त्रि} — \text{या}\ १)}$

$\therefore \text{ज्या}^{२}३६ = \frac{\text{त्रि}^{२} — \text{त्रि}\cdot\text{या}}{२}$

तथा च, $\text{उज्या}३६ = \frac{२\text{या}^{२}}{\text{त्रि}}$ $\therefore \text{उज्या}^{२}३६ = \frac{४\text{या}^{४}}{\text{त्रि}^{२}}$

$\therefore \text{पू}\ \text{या}^{२}३६ = \frac{४\text{या}^{४}}{\text{त्रि}^{२}} + \frac{\text{त्रि}^{२} — \text{त्रि}\ \text{या}}{२} = \frac{८\text{या}^{४} + \text{त्रि}^{४} — \text{त्रि}^{३}\ \text{या}}{२\ \text{त्रि}^{२}}$

$= ४\ \text{ज्या}^{२}\ १८ = ४\ \text{या}^{२}$ समशोधनेन

$\therefore ८\text{या}^{४} + \text{त्रि}^{४} — \text{त्रि}^{३}\cdot\text{या} = ८\text{या}^{२} \times \text{त्रि}^{२}$

$६४\ \text{या}^{४} + ८\ \text{त्रि}^{४} — ८\ \text{त्रि}^{३}\cdot\text{या} = \text{या}^{२}\cdot\text{त्रि}^{२}\ ६४$

$८\text{त्रि}^{३}\cdot\text{या} — ६४\ \text{या}^{४} — ८\text{त्रि}^{४} = — \text{या}^{२}\ \text{त्रि}^{२}\ ६४$

अत्र पक्षयो क्षेप $= \text{या}^{४}६४ + \text{या}^{२}\ \text{त्रि}^{२}१६ + \text{त्रि}^{४}\cdot १$

$\text{या}^{४}\cdot \text{त्रि}^{२}१६ + ८\ \text{त्रि}^{३}\cdot\text{या} + \text{त्रि}^{४}\ १ = \text{या}^{४}६४ — \text{या}^{२}\ \text{त्रि}^{२}\ ४८ + \text{त्रि}^{४}\cdot १$

$\text{या}\ \text{त्रि}४ + \text{त्रि}^{२} = \text{या}^{२}८ — \text{त्रि}^{२}३$, वा, $\text{त्रि}^{२}३ — \text{या}^{२}८$

$\text{या}\ \text{त्रि}\cdot४ + \text{त्रि}^{२} = \text{त्रि}^{२}\cdot ३ — \text{या}^{२}८$

$\text{या}^{२}\ ८ + \text{या}\ \text{त्रि}\cdot४ = २\ \text{त्रि}^{२}$

$\text{या}^{२}१६ + \text{या}\ \text{त्रि}\ ८ + \text{त्रि}^{२} = ५\ \text{त्रि}^{२}$

$\text{या}\ ४ + \text{त्रि} = \sqrt{५\text{त्रि}^{२}}$

$\therefore \text{या}१ = \frac{\sqrt{५\text{त्रि}^{२}} — \text{त्रि}}{४}$

य मूलेऽपत्र मन्ते गृहीत —

त्रि$^{2}$१+या·त्रि४= या$^{2}$८ − त्रि$^{2}$३ समशोधनेन

४त्रि$^{2}$= या$^{2}$८—या·त्रि४

त्रि$^{2}$+८ त्रि$^{2}$=या$^{2}$१६—या·त्रि८+ त्रि$^{2}$

९त्रि$^{2}$=या$^{2}$ १६— या·त्रि·८+ त्रि$^{2}$

३त्रि=या४—त्रि

∴ ४त्रि=या४

∴ त्रि=या १, ( अतस्त्रिज्यकापरिमितमध्यक्रमानमागतं तदसद् चापस्य नवत्यंशाल्पत्वात् तज्जीया त्रिज्याल्पिकैव भवितुं योग्येति मदोक्तिः।

( अथ मुनीश्वरोपरि साक्षेपमाह । )

परोक्तशिल्पानवबोधतस्तद्विश्वासतोऽत्राल्पधियां सुतुष्ट्यै ।
वदन्ति ये युक्ति,-मियं सुदुष्टा ज्ञेया यतः संशयकारिणी सा ॥

वा·भा· परेण जगन्नाथेनोक्तं यत् शिल्पम् ( अर्थादष्टादशांशज्यासाधनोपपत्तिक्षेत्ररूपम् ) तस्याननबोधतोऽज्ञानात्, अर्थात्केन विधिना सिद्धमिदं क्षेत्रं, तदज्ञात्वा, अथ च तत्तस्य जगन्नाथस्य विश्वासतः ( तेन यत्कृतं तत् युक्तमेवेति मत्वा ) स्वसार्वभौमेऽल्पधियां परप्रत्ययनेयबुद्धीनां सुतुष्ट्यै ये मुनीश्वराः युक्तिं तत्प्रकारोपपत्तिं वदन्ति, ते सुदुष्टा वासनाज्ञानहीनाः परप्रतारणपरायणाश्च ज्ञेयाः । यतः सा इयं युक्तिः संशयकारिणी अस्ति, अर्थात् न सा सम्यक् सिद्ध्यतीत्यनेन मदस्य विशदहृदयेऽपि तदुपपत्तिस्फूर्तिर्न जातेति स्पष्टम् ॥

तत्र तावत् मुनीश्वरनिबद्धतत्प्रतिपादकपद्यानि ।

वृत्तपादे नेम्यधोऽग्रात् षट्त्र्यंशाद्यावधि मध्यगम् ।
वृत्तपादं कुर्यथोर्ध्वरेखान्यासं यथा तथा ॥ ३९ ॥
मध्यस्थवृत्तमध्यं तन्नेम्यैक्य स्यादथो भुजः ।
त्रिज्यार्धं, त्रिज्यका कोटिस्तद्वर्गैक्यपदं श्रुतिः ॥ ४० ॥
वृत्तार्धलघुवृत्ताद्भिकेन्द्रयोरन्तरे च सा ।
त्रिज्यार्धोना, वृत्तपादव्यासार्धं षट्त्रिभागजा ॥ ४१ ॥

पूर्णज्यैव पञ्चगुणा त्रिज्यावर्गात्पदार्धकम् ।
त्रिज्यार्धोनमतो मूलं त्रिज्योनं दलितं तथा ॥ ४२ ॥
तदर्धज्या सूक्ष्ममतस्तादृक् मूलं कृतैर्हतम् । इत्यादि—
प्रकारोऽयं जगन्नाथप्रकारप्रतिबिम्बइवास्ति ।

अत्र यथोपपत्तिसिद्धिरनेन प्रकारेण भवति तथा यत्यते ।

अत्र 'केइघ' वृत्तपादम् । तत्र 'घ' विन्दुतो वृत्तपादस्पर्शरेखा=घग=½केघ,कार्या । ततः 'ग' केन्द्रतः नघक वृत्तं 'गघ' त्रिज्यया विधेयम् । केगन रेखा कार्या । अथ 'के' केन्द्रात् 'केक' त्रिज्यया 'कम' वृत्तखण्डमुत्पाद्यम् ।

अत्रोपपत्तिः ।

$\text{केन}\times\text{केक}=\text{केघ}^2$ ( ३।३५ )

परन्तु, $\text{केन}=\text{केक}+२\text{कग}=\text{केम}+\text{केघ}$, तथा च, $\text{केक}=\text{केम}$ $\therefore$ $\text{केघ}^2=(\text{केम}+\text{केघ})\,\text{केम}=\text{केम}^2+\text{केघ}\times\text{केम}$ $\therefore \text{केघ}^2-\text{केम}\times\text{केघ}=\text{केम}^2$ $=\text{केघ}\,(\text{केघ}-\text{केम})=\text{मघ}\times\text{केघ}=\text{केम}^2$, अनेन ( २।११ ) उपपन्नम् ।

अथ $\text{केम}=\text{घच}$ ( ४।१ ) । केच रेखा कार्या । तदा केचघ त्रिभुज ( ४।१० ) अनेन तथा जातं, यत्र $\angle\text{घकेच}=\frac{1}{2}\angle\text{केचघ}=\frac{1}{2}\text{केघच}$ $\therefore \angle\text{घकेच}=३६$ । तेन $\text{घच}=\text{पूज्या}३६=\text{केम}=\text{केक},=२\text{ज्या}१८$

अथात्र $\text{केग}=\sqrt{\text{केघ}^2+\text{घग}^2}=\sqrt{\text{त्रि}^2+\frac{\text{त्रि}^2}{४}}=\sqrt{\frac{५\text{त्रि}^2}{४}}=\frac{\sqrt{५\text{त्रि}^2}}{२}$

परन्तु, $\text{केग}=\text{केक}+\text{कग}=\text{केम}+\frac{\text{त्रि}}{२}=२\text{ज्या}१८+\frac{\text{त्रि}}{२}$

$\therefore २\text{ज्या}१८+\frac{\text{त्रि}१}{२}=\frac{\sqrt{५\,\text{त्रि}^2}}{२}$, $\therefore \text{ज्या}१८=\frac{\sqrt{५\,\text{त्रि}^2}-\text{त्रि}}{४}$

अत उपपन्नं सर्वं युक्तम् ।

अथवाऽष्टादशांशज्योपपत्तिः ।




अत्र अकेप वृत्तपादे ∠पकेग = ३६, कार्यः । तदा ∠केगप=७२=∠केपग । अथ तत्र ∠केगच $=\frac{1}{2}$∠केगप, ( ११९ ) तदा ∠चकेग = ∠चगके =३६ .˙. केच=चग,एवं यत. ∠चगप=३६,∠चपग=७२

.˙. ∠गचप=७२ .˙. गच=गप .˙. केच=चग=गप,जाता । तत्र केगप, गचप।

त्रिभुजयो साजात्यात् $\frac{\text{गप}}{\text{केग}}=\frac{\text{चप}}{\text{गप}}$ .˙. $\frac{\text{गप}^2}{\text{केग}}$=चप, परन्तु केप−चप= केच= गप। केप $-\frac{\text{गप}^2}{\text{केग}}$=गप, .˙. केप×केग−गप$^2$=गप×केग

{ अत्र केप=त्रि
{ गप=२ज्या१८

.˙. त्रि$^2$ −गप$^2$=गप×त्रि .˙. त्रि$^2$=गप$^2$+गप×त्रि .˙. ४त्रि$^2$ =४गप$^2$+४ गप·त्रि .˙. ४त्रि$^2$+त्रि$^2$=४गप$^2$+ ४गप×त्रि+त्रि

.˙. मूले गृहीते $\sqrt{\text{५त्रि}^2}$=२गप+त्रि .˙. $\frac{\sqrt{\text{५त्रि}^2}-\text{त्रि}}{2}$=

गप=२ज्या१८ .˙. $\frac{\sqrt{\text{५त्रि}^2}-\text{त्रि}}{4}$=ज्या१८,अतउपपन्नम्

एवं ज्यौतिःशास्त्रकल्पकमैथिलपण्डितश्रीनीलाम्बरशर्मनिर्मितगोलप्रकाशे अनेके प्रकाराः सन्ति । विशेषवासिनारसिकैरवलोकनीयः सच ग्रन्थः इति किं पल्लवितेन ।

ग्र·का·— 'पश्चाद्गत भाक् गणितेन सूक्ष्मा सन पद सावयव गृहीत्वा । तद् त्रिज्यकाप्त त्रिभजीवयोन, वेदाहृतं स्याद्धृतिभागजीवा ॥ १ ॥"

वा· भा· "अत्र पूर्वोपपत्त्या ज्या १८ $= \frac{\sqrt{\text{त्रि}^{२} ५} - \text{त्रि}}{४} = \frac{\text{त्रि}\sqrt{५} - \text{त्रि}}{४}$

$\therefore \sqrt{५} = २।१४।१० \quad \because \frac{(२।१४।१०)\,\text{त्रि} - \text{त्रि}}{४}$

$=$ ज्या १८, इत्युपपन्नम् ।"

ग्र· का·—दो कोटिभागान्तरजज्यकाया , प्रकारतो वेदशराशजीवा ।
अत्र स्फुटा पञ्चपदत्रिमज्याहतिस्त्रिभज्यासहिताऽब्धिभक्ता ॥

वा. भा —अत्र भु = १८, मत्वा ततो 'द्विसगुणो बाहुगुणस्य वर्ग' इत्यादिना वेदशराशज्या सिद्ध्यत्येव तत्रोक्तवत्—

$$\text{ज्या}\,(७२ - १८) = \text{ज्या}\,५४ = \text{त्रि} - \frac{२\,\text{ज्या}^{२}\,१८}{\text{त्रि}}$$

$$= \text{त्रि} - \left(\frac{\sqrt{\text{त्रि}^{२}५} - \text{त्रि}}{४}\right)^{२} \times \frac{२}{\text{त्रि}}$$

$$= \text{त्रि} - २\left(\frac{\text{त्रि}^{२}५ + \text{त्रि}^{२} - २\,\text{त्रि}\sqrt{\text{त्रि}^{२}५}}{१६ \times \text{त्रि}}\right)$$

$$= \frac{१६\,\text{त्रि}^{२} - १२\,\text{त्रि}^{२} + ४\,\text{त्रि}\sqrt{५\,\text{त्रि}^{२}}}{१६ \times \text{त्रि}}$$

$$= \frac{४\,\text{त्रि}^{२} + ४\,\text{त्रि}\sqrt{\text{त्रि}^{२}५}}{१६ \times \text{त्रि}}$$

$$= \frac{४\,\text{त्रि}}{४\,\text{त्रि}}\left(\frac{\text{त्रि} + \sqrt{५\,\text{त्रि}^{२}}}{४}\right) = \frac{\text{त्रि} + \sqrt{\text{त्रि}^{२}५}}{४} = \frac{\text{त्रि} + \text{त्रि}\sqrt{५}}{४}$$

अतउपपन्नम् ।"

ग्र· का —धृत्यशवेदेषुलवज्यकाभ्यां तत्कोटिभागज्यकयोश्च वर्गौ ।
साशा खमूलेन ( २ । १४ । १० ) युता विहीना
गजैर्हृता,—स्तत्फलयोश्च मूले· ॥
( ०० । ५७ । ४ ) ॥ ( ० । ३५ । ३६ ) ॥

त्रिभज्यया संगुणिते, क्रमेण द्विशैलपड्वहिलवज्यके स्त ।
एव च वेदेषु—खरांद्विभागज्याभ्या च चापान्तरशिञ्जिनी या ॥
यथोक्तवत् तत्र सदा गुणोऽय ( ०।२४।२४।१५।७ )
त्रिभज्यकाया खलु चोपपन्न ।
तद्घ्नत्रिभज्यैव जिनांशजीवा व्यक्ता भवेद्वासनया बुधानाम् ॥

वा.भा.—

धृत्यशनेदेपुलवज्यकाभ्या ये कोटिज्ये, ते द्विशैलपड्वहिलवज्यके भवत इति स्पष्टम्।

अत्रोपपत्ति ।

अत्र तावत् ज्या १८ $=\dfrac{\sqrt{\text{५त्रि}^2}-\text{त्रि}}{४}$ ∴ उज्या ७२ $=\text{त्रि}-\dfrac{\sqrt{\text{५त्रि}}-\text{त्रि}}{४}$

$=\dfrac{\text{५त्रि}-\sqrt{\text{त्रि}^2\text{५}}}{४}$, अत "त्रिज्योत्क्रमज्यानिहतेर्दलस्य मूल तदर्धांशकशिञ्जिनी"—त्यादिना ज्या ३६ $=\dfrac{\sqrt{\text{५त्रि}^2-\text{त्रि}\sqrt{\text{त्रि ५}}^2}}{८}$

$=\dfrac{\sqrt{\text{५त्रि}^2-\sqrt{\text{त्रि}^4\text{५}}}}{८}$

अतउपपद्यते "त्रिज्याकृतीपुघातात् त्रिज्याकृतिवर्गपञ्चघातस्य ।
मूलोनादष्टहृतान्मूलं षट्त्रिंशदशज्या ॥" इति भास्करोक्तम् ॥

प्रकृते तु ज्या ३६ $=\dfrac{\sqrt{\text{५त्रि}^2-\sqrt{\text{त्रि}^4\text{५}}}}{८}=\dfrac{\sqrt{\text{५त्रि}^2-\text{त्रि}^2\sqrt{\text{५}}}}{८}$

$=\dfrac{\text{त्रि}\sqrt{\text{५}-\sqrt{\text{५}}}}{८}$ , अत्र वाणा स्वमूलेन विहीना गजैर्हृता

फलस्य मूल त्रिज्यया गुण तदा षड्त्रिंशज्यामानमित्युपपन्नम्।

अथ तत ज्या ७२ $=\sqrt{\text{त्रि}^2-\text{ज्या}^2 १८}=\sqrt{\text{त्रि}^2-\left(\dfrac{\sqrt{\text{५त्रि}^2}-\text{त्रि}}{४}\right)^2}$

$$=\sqrt{\frac{\text{त्रि}^{२}-\text{५त्रि}^{२}+\text{त्रि}^{२}-\text{२त्रि}\sqrt{\text{५त्रि}^{२}}}{\text{१६}}}$$

$$=\sqrt{\frac{\text{१६त्रि}^{२}-\text{६त्रि}^{२}+\text{२त्रि}\sqrt{\text{त्रि}^{२}\text{५}}}{\text{१६}}}$$

$$=\sqrt{\frac{\text{१०त्रि}^{२}+\text{२त्रि}^{२}\sqrt{\text{५}}}{\text{१६}}}=\sqrt{\frac{\text{५त्रि}^{२}+\text{त्रि}^{२}\sqrt{\text{५}}}{\text{८}}}$$

$$=\text{त्रि}\sqrt{\frac{\text{५}+\sqrt{\text{५}}}{\text{८}}}$$

अनेन "बाणा स्वमूलेन युता विभक्ता गजै, फलस्य मूल त्रिज्यया गुणितं द्विशैललवज्यामान स्यात्॰ ।

अथेयम्॰—

$$\text{ज्या}\,\text{२४} = \text{ज्या}\,(\text{५४}-\text{३०})$$

$$=\frac{\text{ज्या५४}\times\text{कोज्या३०}-\text{ज्या३०}\times\text{कोज्या५४}}{\text{त्रि}}$$

$$=\frac{\text{ज्या५४}\times\text{ज्या६०}-\text{ज्या३०}\times\text{ज्या३६}}{\text{त्रि}}$$

$$=\frac{\text{१}}{\text{त्रि}}\left\{\left(\frac{\text{त्रि}+\text{त्रि}\sqrt{\text{५}}}{\text{४}}\right)\frac{\text{त्रि}\sqrt{\text{३}}}{\text{२}}-\frac{\text{त्रि}}{\text{२}}\left(\sqrt{\frac{\text{५त्रि}^{२}-\sqrt{\text{५त्रि}^{२}}}{\text{८}}}\right)\right\}$$

$$=\frac{\text{त्रि}^{२}}{\text{त्रि}}\left\{\left(\frac{\text{१}+\sqrt{\text{५}}}{\text{८}}\right)\frac{\sqrt{\text{३}}}{\text{२}}-\frac{\text{१}}{\text{२}}\sqrt{\frac{\text{५}-\sqrt{\text{५}}}{\text{८}}}\right\}$$

$$=\text{त्रि}\left\{\frac{(\text{१}+\text{२।१४।१०})(\text{१।४३।५५})}{\text{१६}}-\frac{\text{१}}{\text{२}}\sqrt{\frac{\text{५}-\text{२।१४।१०}}{\text{८}}}\right\}$$

$$=\text{त्रि}\left\{(\text{··।४२।२।१५।७})-(\text{।=१७।३८})\right\}$$

$$=\text{त्रि}(\text{··।२४।२४।१५।७})$$

इदुपपन्न सर्वम् ।

अन्योन्यदोःकोटिगुणाहती ये
त्रिज्योद्धृते तत्फलयोस्तथैव ।
कोटिज्ययोर्दोर्ज्यकयोश्च वर्गा-
न्तरं तु यत्तत्सममेव बोध्यम् ॥१०२॥

अत्रोपपत्तिः ।

यथा चापमाने अ, क । ततः $\text{कोज्या}^2\text{अ} - \text{कोज्या}^2\text{क}$

$$= (\text{त्रि}^2 - \text{ज्या}^2\text{अ}) - (\text{त्रि}^2 - \text{ज्या}^2\text{क}) = \text{त्रि}^2 - \text{ज्या}^2\text{अ} - \text{त्रि}^2 + \text{ज्या}^2\text{क}$$
$$= \text{ज्या}^2\text{क} - \text{ज्या}^2\text{अ},$$

अत उपपन्नमुत्तरार्धम् ।

अथ ततः $\text{कोज्या}^2\text{अ} - \text{कोज्या}^2\text{क} = \dfrac{\text{त्रि}^2(\text{कोज्या}^2\text{अ} - \text{कोज्या}^2\text{क})}{\text{त्रि}^2}$

$$= \frac{\text{त्रि}^2\ \text{कोज्या}^2\text{अ} - \text{त्रि}^2\cdot\text{कोज्या}^2\text{क}}{\text{त्रि}^2}$$

$$= \frac{(\text{ज्या}^2\text{क} + \text{कोज्या}^2\text{क})\text{कोज्या}^2\text{अ} - (\text{ज्या}^2\text{अ} + \text{कोज्या}^2\text{अ})\text{कोज्या}^2\text{क}}{\text{त्रि}^2}$$

$$= \frac{\text{ज्या}^2\text{क}\ \text{कोज्या}^2\text{अ} + \text{कोज्या}^2\text{क}\ \text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}\ \text{कोज्या}^2\text{क} - \text{कोज्या}^2\text{अ}\ \text{कोज्या}^2\text{क}}{\text{त्रि}^2}$$

$$= \frac{\text{ज्या}^2\text{क}\ \text{कोज्या}^2\text{अ} - \text{ज्या}^2\text{अ}\ \text{कोज्या}^2\text{क}}{\text{त्रि}^2}$$

$$= \left(\frac{\text{ज्या क कोज्या अ}}{\text{त्रि}}\right)^2 - \left(\frac{\text{ज्या अ कोज्या क}}{\text{त्रि}}\right)^2$$

अत उपपद्यते पूर्वार्धम् ।

यच्चापयोर्वृत्तचतुर्थभाग-
स्थयोश्च वर्गान्तरकं ज्ययोर्यत् ।
तच्चापयुत्यन्तरदोर्लवैक-
ज्याघ्नं द्वितीया नियमाज्ज्यका स्यात् ॥ १०३ ॥

अत्रोपपत्तिः ।

यथाऽत्र चापे अ, क, ततः $\text{ज्या}^2\text{क} - \text{ज्या}^2\text{ग} = \frac{\text{त्रि}^2 (\text{ज्या}^2\text{क} - \text{ज्या}^2\text{ग})}{\text{त्रि}^2}$

$$= \frac{\text{त्रि}^2 \cdot \text{ज्या}^2\text{क} - \text{त्रि}^2 \cdot \text{ज्या}^2\text{ग}}{\text{त्रि}^2} = \frac{(\text{ज्या}^2\text{ग} + \text{कोज्या}^2\text{ग})\,\text{ज्या}^2\text{क} - (\text{ज्या}^2\text{क} + \text{कोज्या}^2\text{क})\,\text{ज्या}^2\text{ग}}{\text{त्रि}^2}$$

$$= \frac{\text{ज्या}^2\text{ग} \cdot \text{ज्या}^2\text{क} + \text{कोज्या}^2\text{ग}\ \text{ज्या}^2\text{क} - \text{ज्या}^2\text{क}\ \text{ज्या}^2\text{ग} - \text{कोज्या}^2\text{क}\ \text{ज्या}^2\text{ग}}{\text{त्रि}^2}$$

$$= \frac{\text{कोज्या}^2\text{ग} \cdot \text{ज्या}^2\text{क} - \text{कोज्या}^2\text{क}\ \text{ज्या}^2\text{ग}}{\text{त्रि}^2} =$$

$$= \frac{(\text{कोज्याग ज्याक} + \text{कोज्याक ज्याग})\ (\text{कोज्याग ज्याक} - \text{कोज्याक ज्याग})}{\text{त्रि}}$$

$= \text{ज्यायो} \times \text{ज्याल्प} = \text{ज्यावर्गान्तरम्}$ ।

$\therefore \text{ज्यायो} = \frac{\text{ज्यावर्गान्तर}}{\text{ज्याल्प}}$ । वा, $\text{ज्याल्प} = \frac{\text{ज्यावर्गान्तर}}{\text{ज्यायो}}$ । अत उपपन्नम् ॥

इति ज्योत्पत्तिः ॥



अथ कुण्डप्रकरणम् ।

तर्कप्रभृत्यखिलशास्त्रविदोऽपि विज्ञाः
रेखात्मकमूलगणितानवबोधतश्च ।
स्वल्पान्तरान्महदनिष्टफलस्य भीत्या
भ्रान्ता भ्रमन्त्यखिलवदत्र च, सूक्ष्मरीत्या ॥१०४॥
कुण्डावबोधनविधौ परनिर्मितानि
स्थूलप्रकारजनितान्यशुभानि बुद्ध्वा ।
तेन ज्यकागणितवासनया प्रसङ्गात्
द्विकुण्डसाधनविधिं प्रवदामि सूक्ष्मम् ॥१०५॥

तर्को नाम न्यायशास्त्र तदादिसकलशास्त्रवेत्तारोऽपि विज्ञा पण्डिता.

---

* यथोक्तं पुरश्चर्यार्णवे । वक्ररेखात्मकं कुण्डं यो करोति नराधम । तस्य भार्या धन पुत्रा आयु नाश्य च नश्यति ॥"

रेखात्मकमूलानयनगणितस्यानवबोधतोऽज्ञानात्, स्वल्पान्तरान् विशेषदुष्टफलप्राप्तेर्भीत्या वास्तवतद्रचनागमार्थं भ्रान्ता इतस्ततः पृच्छन्तोऽलिवत् भ्रमन्ति। तेन हेतुना तत्र परनिर्मितानि स्थूलप्रकारसिद्धानि अशुभफलजनकानि इतीह बुद्ध्या सूक्ष्मरीत्या ज्यकागणितवासनया सूक्ष्मं दिक्कुण्डसाधनविधिं प्रसङ्गवशात् वच्मि॥

अथ कुण्डनामानि—

चतुर्भुजं, वृत्त-मथार्धचन्द्रम्,
त्रिकोणकं, योनिसमाह्वयं च।
षडस्र-मष्टास्र-मथाष्टपत्रम्,
पद्माह्वयं चापि, तु पञ्चकोणम्॥ १०६॥
सप्तास्रकं चे-ति दशैव कुण्डा—
न्युक्तानि तज्ज्ञैरिह सत्फलार्थम्।
हस्तद्विहस्तादिफलोन्मितानि,
तत्राङ्गुलैः सिद्धमितैश्च हस्तः॥ १०७॥

षष्टिव्यङ्गुलकैरङ्गुलं, व्यङ्गुलकं तथा।
प्रतिव्यङ्गुलषष्ट्या स्याद्गणितार्थं क्रमस्त्वयम्॥ १०८॥

१हस्त=२४ अं०। १अ=६० व्य०। १व्य०=६०प्र०व्य इति। शेषं स्पष्टम्॥

तत्रैकहस्तजक्षेत्रफलं जिनकृतेः ५७६ समम्।
द्वित्र्यादिगुणितं तद्धि द्व्यादिहस्तोद्भवं सदा॥ १०९॥
फलमेकभवं द्व्यादिगुणितं द्व्यादिहस्तजम्।
नहि द्व्यादिकराणां चाङ्गुलवर्गसमं हि तत्॥ ११०॥

अत्र यतः, १हस्त=२४ अ $\because$ $१ह^2=२४^2=५७६=$ इदमेकहस्तात्मकम्। अतो हस्तद्वयात्मकं फलमपेक्षितं सदा तत् द्विगुणितं सद्भवेत्। अत्र द्व्यादिहस्तानामङ्गुलवर्गतुल्यं द्व्यादिहस्तात्मकं फलं नहि ज्ञेयम्। यतो द्व्यादिहस्ताङ्गुलवर्गकरणेन चतुर्नवषोडशादिहस्तात्मकं

फल भवेत्, नहि व्यादिहस्तात्मक फलमिति चतुरगणकैर्ज्ञातव्यम् ॥

**आयुरारोग्यमैश्वर्यं लभते समबाहुके ।**
**सूक्ष्मक्षेत्रफले कुण्डे, तद्ध्रासो विषमे भुजे ॥ १११ ॥**
**अज्ञैस्त्र्यस्रादिकुण्डेषु यैर्भुजा विषमाः कृताः ।**
**चतुर्भुजेऽपि विषमा भुजाः किं न कृतास्च तैः ॥११२॥**

समबाहुके कुण्डे आयुरारोग्यमैश्वर्यं लभते, विषमबाहुके तु तत्तेषामायुरारोग्यैश्वर्याणां ह्रास इति । शेष सुगमम् ॥

**एकद्विघ्नफलाभ्यां ये पदे, ते बाहुविस्तृती ।**
**स्यातां समश्रुतौ चाद्ये कुण्डे तुल्यचतुर्भुजे ॥ ११३ ॥**

एकद्विघ्नफलाभ्या यद्द्येत्ररूप कुण्ड, तत्र ये पदे, ते समश्रुती समचतुर्भुजे अर्थात् वर्गक्षेत्राकारे कुण्डे बाहुविस्तृती भवेता-मनेणोति शेष । अर्थाद्धस्तद्वयात्मक फल यस्य क्षेत्रस्य तत्र द्विघ्नैकहस्तजक्षेत्रफलस्यासन्नमूलतुल्यो भुज समवेदिति ॥

**आसन्नमूलग्रहणाद्भुजो व्यासश्चतुर्भुजे ।**
भु=२४,व्यासः =३३,५६
**'एकहस्ते' द्व्यादिहस्तेऽप्येवं साध्यं विचक्षणैः ॥११४॥**

एकहस्तात्मके चतुर्भुजे (वर्गक्षेत्रे) यत फलम्=५७६. ∴.भु=२४ अथात वर्गक्षेत्रोपरिगतवृत्तव्यासस्तु कर्णरेखारूप एवात ।



$\text{भु}^2+\text{भु}^2=\text{क}^2$ ∴ $2\ \text{भु}^2=\text{व्या}^2$

—।—।

∴ $2\times 576=1152=\text{व्या}^2$

अत्र '११५२' अस्य मूलम्=३३ ।
शेषम्=६३, अतो—"मूलावशेषक

सैक परिघ्न विकलान्वितम् । द्विगुणेन द्वियुतेन मूलेनाप्त स्फुटं भवेदित्यादिना—

$$\frac{(\text{६३}+\text{१})\,\text{६०}+\text{०}}{\text{२}\times\text{३३}+\text{२}}=\frac{\text{३८४०}}{\text{६८}}=\text{५६}+\frac{\text{२६}}{\text{६८}}$$

स्वल्पान्तरात् सावयवमूलम्=३३।५६ अत उपपन्नम् ।

अथ वृत्तकुण्डे व्यासानयनम्—

**अष्टघ्नात् फलवर्गाच्च पञ्चभक्तात् पदात् पदम् ।**
**अभीष्टे वर्त्तुले कुण्डे व्यासमानं प्रजायते ॥ ११५ ॥**

अत्र फलवर्गात् वृत्तफलवर्गादिति । शेषं सुगमम् ।

अत्रोपपत्तिः ।

अथ व्या=व्यासः, तदा परिधिः=प=$\sqrt{\text{व्या}^{\text{२}}\ \text{१०}}$ ततो वृत्तक्षेत्रफलम् = फ. = $\frac{\text{व्या}\times\sqrt{\text{व्या}^{\text{२}}\ \text{१०}}}{\text{४}}=\sqrt{\frac{\text{व्या}^{\text{४}}\ \text{१०}}{\text{१६}}}=\sqrt[\text{४}]{\frac{\text{व्या}^{\text{४}}\ \text{५}}{\text{८}}}$

$$\therefore \text{फ}^{\text{२}}=\frac{\text{व्या}^{\text{४}}\ \text{५}}{\text{८}},\ \therefore \frac{\text{फ}^{\text{२}}\times\text{८}}{\text{५}}=\text{व्या}^{\text{४}}\ \therefore \sqrt[\text{४}]{\frac{\text{फ}^{\text{२}}.\ \text{८}}{\text{५}}}=\text{व्या}.$$

अत उपपन्नम् ॥

**आसन्नमूलग्रहणात् व्यासः ससास्त्रिसंमितः ।**
**एकहस्ते, तथा द्व्यादिहस्ते स्वस्वफलक्रमात् ॥११६॥**

अत्र युक्तिः । यत एकहस्तात्मकक्षेत्रफलात्मके वृत्तक्षेत्रे फलम्=५७६अं

$$\therefore \frac{\text{५७६}^{\text{२}}\times\text{८}}{\text{५}}=\frac{\text{३३१७७६}\times\text{८}}{\text{५}}=\frac{\text{२६५४२०८}}{\text{५}}=\text{५३०८४१}+\frac{\text{३}}{\text{५}},$$

$$\therefore \sqrt[\text{४}]{\text{५३०८४१}+\tfrac{\text{३}}{\text{५}}}=\text{२७},\quad \text{इत्युपपन्नम्} ॥$$

अथार्धचन्द्राकृतिकुण्डव्यासानयनम्—

**द्वात्रिंशद्गुणितात् पञ्च-भक्ताच्च फलवर्गतः ।**
**मूलमूलं दलेन्द्वाभे व्यासमानं प्रजायते ॥ ११७ ॥**

दलेन्द्वाभे अर्धचन्द्राकारेऽर्थात् अर्धवृत्ते कुण्डे, फलवर्गतोऽर्थाद्वृत्तार्धफलवर्गतः, शेषं स्पष्टम् ।

अत्रोपपत्तिः ।

अत्र भट्टोक्त्या, $प=\sqrt{व्या^2 १०}$, अतः $फलम् = \frac{वृ.प\times व्या}{४}$

$= \frac{व्या\sqrt{व्या^2 १०}}{४} = \sqrt{\frac{व्या^४ १०}{१६}} = \sqrt{\frac{व्या^४ ५}{८}}$ = वृक्षे. अस्यार्द्धमर्ध-

वृत्तफलम् $= \frac{वृ.फ}{२} = \frac{१}{२}\sqrt{\frac{व्या^४ ५}{८}} = \sqrt{\frac{व्या^४ ५}{३२}}$ = अ.वृ.फ,

$\therefore \frac{व्या^४ ५}{३२} = अ.वृ.फ^2$ ।

$\therefore व्या = \sqrt[४]{\frac{अ.वृ.फ^2 ३२}{५}}$ । अत उपपन्नं सर्वम् ॥

अथ गणितेन निष्पन्नाङ्कमाह—

**आसन्नमूलग्रहणादङ्गुलान्यष्टवह्नयः ( अं ३८ )।**
**षडङ्गुलानि दश, व्यासश्चैकहस्तार्धचन्द्रके ॥ ११८ ॥**

अर्थात् एकहस्तात्मकार्धचन्द्रकुण्डे व्यास =अं३८ । व्यं १०,

अत्र युक्तिः। तत्र पूर्वश्लोकोक्त्या $व्या = \sqrt[४]{\frac{अ.वृ.फ^2\times ३२}{५}}$, अत्र $पं^2=५७६$

$\therefore व्या = \sqrt[४]{\frac{५७६\times ३२}{५}} = \sqrt[४]{\frac{१८४३२}{५}} = ३८^{\circ}। १०$

अत उपपन्नम् ॥

अथ समत्रिभुजकुण्डे व्यासानयनम्—

**समत्रिभुजकुण्डस्य फलवर्गो नृपाहतः ।**
**त्रिभक्तस्तत्पदान्मूलं भुजः स्यादथ तत्कृतिः ॥११९॥**
**स्वत्र्यंशसंयुता कार्या, व्यासः स्यात् तत्पदं त्विह ॥**




अत्रोपपत्तिः ।

अत्र 'अकग' समत्रिभुजम्, अथ ( ४अ.३प्र ) अनया युक्त्या अ क, क ग भुजयोः समद्विभाग विधाय,ताभ्यां कृतलम्बरेखे स्वस्वभुजसंमुखकोणगामिन्यौ भवतः अन्यथा समभुजत्वमेव न स्यात्तेन), क ग भुजोपरि 'अ' कोणात् कृतो 'अ च' लम्ब., क ग भुजार्द्धमेव करिष्यति ∴ क च = च ग. । एवं 'ग' विन्दोः अ क भुजोपरि कृतो लम्ब.= गल, अ क भुजार्धं करोति, अतः अ ल = ल क, परन्तु त्रिभुजोपरिस्थवृत्तव्यासार्धं तु = रअ = रग = रक=रत, अथ अक चापोपरिस्थत्वात् ∠ अगक = ∠ अतक = ६०°, एव

$$\angle \text{कअत} = \frac{\angle \text{करत}}{२} \ (\text{३।२०}) \quad \text{तथा} \ \angle \text{कअत} = \frac{\angle \text{कअग}}{२}$$

∴ ∠ कतर = ∠ तरक = ६० ∴ कर = तर, तेन

अतक त्रिभुजे कर्णः=अत=व्या, भुजः = तक= $\frac{\text{व्या}}{२}$, को=भुजः=अक।

$$\therefore \text{व्या}^{२} - \left(\frac{\text{व्या}}{२}\right)^{२} = \text{भु}^{२}, \quad \text{वा}, \text{व्या}^{२} - \frac{\text{व्या}^{२}}{४} = \frac{३\ \text{व्या}^{२}}{४} = \text{भु}^{२}$$

$$\therefore \text{व्या}^{२} = \frac{\text{भु}^{२}.४}{३} \therefore \text{व्या} = \sqrt{\frac{\text{भु}^{२}४}{३}}$$ अत उपपन्नम् 'अथ तद्वति'

इत्यारभ्य 'व्यासः स्यात् तत्पदं त्रिहे' इत्यन्तम् ।

अत्र अकच त्रिभुजे $\text{अक}^{२} - \text{कच}^{२} = \text{अच}^{२}$

या, $\text{भु}^{२} - \frac{\text{भु}^{२}}{४} = \frac{३\,\text{भु}^{२}}{४} = \text{लं}^{२}$

अत अकग त्रिभुजफसवर्ग $= \text{फ}^{२} = \frac{\text{लं}^{२} \times \text{भु}^{२}}{४} = \frac{३\,\text{भु}^{२}}{४} \times \frac{\text{भु}^{२}}{४} =$

$\frac{३\,\text{भु}^{४}}{१६}$, अतो विलोमेन $\frac{\text{फ}^{२}\,१६}{३} = \text{भु}^{४} \therefore \sqrt[४]{\frac{\text{फ}^{२}\,१६}{३}} = \text{भु}$। अत उपपन्न पूर्वोक्त सर्वम् ॥

अथवा तदेवाह—

**त्र्यस्राद्वा फलाद्वर्गो मैर्हतस्तत्पदात्पदम् ॥ १२० ॥**
**व्यासमानं भवेत् तत्र चैकरस्ते भुजो भवेत् ।**
**कुण्डेऽङ्गुलादिको व्यासश्चासम्नपदतः किल ॥ १२१ ॥**

अत्र पूर्वश्लोकोक्त्या $\frac{\text{फ}^{२}\,१६}{३} = \text{भु}^{४}$, तथाच "तत्कृति स्वन्यश-सयुता" इत्यादिना $\text{व्याँ}^{२} = \frac{\text{भु}^{२}\,४}{३} \therefore \frac{\text{व्याँ}^{२}\,३}{४} = \text{भु}^{२} \therefore \frac{\text{व्याँ}^{४}\,९}{१६} = \text{भु}^{४}$

$\therefore \frac{\text{फ}^{२}\,१६}{३} = \frac{\text{व्याँ}^{४}\,९}{१६}$ समीकरणेन

$\text{फ}^{२}\,१६ \times १६ = \text{व्याँ}^{४}\,९ \times ३$

$\frac{\text{फ}^{२}\,१६^{२}}{२७} = \frac{(\text{फ}१६)^{२}}{२७} = \text{व्याँ}^{४} \therefore \sqrt[४]{\frac{(\text{फ}१६)^{२}}{२७}} = \text{व्या}$। अत उपपन्न सर्वम् ॥

**फलात् स्वखाद्वेदघ्नात् त्र्यद्रिखाद्रिहृतात् पदम् ।**
**याहुरश्वत्थपत्राभे योनिकुण्डे प्रजायते ॥ १२२ ॥**

समत्रिभुजवत् तस्माद्व्यासोऽप्यत्राथ हस्तजे ।
कुण्डे भुजो भवेद्व्यासोऽङ्गुलाद्यो गणितेन वै ॥ १२३ ॥

इत्येको योनिकुण्डप्रकारः ।

अत्रोपपत्तिः ।

तत्र क्षेत्रस्य तद्रचनाक्षेत्रम् ( १४७ श्लो )

तत्रैक समत्रिबाहुक, तद्बहिर्वृत्तार्धद्वय, तथा कुण्डशीर्षानयनरूप मात्यत्रिभुजमेकं चेति प्रथमयोनिकुण्डे सन्ति क्षेत्राणि । अत एतेषां फलयोगस्तत्फलमानमिति स्पष्टम् ।

$$\text{तत्र स त्रि.भु} = \frac{\text{मु}^{२}\sqrt{३}}{४}, \text{ तथा वृ फ} = \frac{\text{मु}^{२}\sqrt{१०}}{४}, \text{ एव}$$

$$\text{आ त्रि.फ} = \frac{\text{मु}^{२}}{४} \therefore \text{यो कु फ} = \frac{\text{मु}^{२}(\sqrt{३} + \sqrt{१०} + \sqrt{१})}{४} =$$

$$\frac{\text{मु}^{२}(१।४३।५५) + (३।९।४४) + १}{४} = \frac{\text{मु}^{२}(५।५३।३९)}{४} = \text{यो फ}$$

$$\text{अत्र} \frac{(५।५३।३९)\,३६००}{३६००} = \frac{२१२१९}{३६००} \therefore \text{यो फ} = \frac{\text{मु}^{२}\,२१२१९}{१४४००} =$$

$$\frac{\text{मु}^{२}\,७०७३}{४८००} \therefore \frac{\text{यो फ}\,४८००}{७०७३} = \text{मु}^{२} \therefore \sqrt{\frac{\text{यो फ}\,४८००}{७०७३}} = \text{मु}$$

इत्युपपन्नम्, शेषं सुगमम् ॥

अथ द्वितीययोनिकुण्डे व्यासभुजयोरानयनम्—

अथवाऽश्वत्थपत्राभे योनिकुण्डे फलं तु यत् ।
षष्टिवर्गगुणादस्मात् त्रिद्विदन्तैर्हृतात्पदम् ॥ १२४ ॥
व्यासमानं भवेन्नूनं तद्वर्गार्धपदं भुजः ।
हस्तयोनौ व्यासमानमिदम् २४।२१।२०, बाहुरयं (१७।१६)
सदा ॥ १२५ ॥

अत्रोपपत्तिः ।

क्षेत्रस्य रचनाक्षेत्रं पुरस्तात् ( १४९ पृ. ) । अत्रैव वर्गक्षेत्र तद्-

बहिर्वृत्तार्धद्वय चेति । तेन चूफ + वक्षेफ = योफ = फ

$$\text{अथ} \because \text{चूफ} = \frac{\text{भु}^2\sqrt{5}}{32},\ \text{वद्योप} = \text{भु}^2 \therefore \text{भु}^2 + \frac{\text{भु}^2\sqrt{5}}{32}$$

=फ=परन्त्वत्र २भु² = व्या², वर्गक्षेत्रोपरिगतवृत्तक्षेत्रव्यासवर्ग ।

$$\therefore \frac{\text{व्या}^2}{2} = \text{भु}^2 \therefore \text{फ} = \frac{\text{व्या}^2}{2} + \frac{\text{व्या}^2}{2} \times \frac{\sqrt{5}}{32} = \text{व्या}^2\left(\frac{1}{2} + \frac{\sqrt{5}}{32}\right)$$

$$= \text{व्या}^2\left(\frac{1}{2} + \frac{12645}{320008}\right) = \text{व्या}^2\left(\frac{17210}{14000}\right)$$ हरभा यो

$\left(\frac{26}{6}\right)$ अनेनापवर्तितौ तदा, $\text{फ} = \text{व्या}^2\left(\frac{3223}{3600}\right)$ $\frac{\text{फ} \times 3600}{3223}$

= व्या², अस्य मूल व्यास इत्युपपन्न सर्वम् ।

अथ हस्तयोनौ कि तु एकहस्ता मध्यफलानि योनिकुण्डे—

$$\therefore \text{व्या}^2 = \frac{576 \times 3600}{3223} = \frac{20736}{3223}$$

$$\therefore \text{व्या} = \sqrt{\frac{20736}{3223}} = 25 \mid 22 \mid 20$$

एव भुजोऽपि = १७ । ५६ इति ।

अथ पद्मकुण्डस्य भुजानयनम्—

एवं पद्मकुण्डस्य फलवर्गोऽष्टिसङ्गुणः ।
भैर्हृतस्तत्पदान्मूलं भुजमानं प्रजायते ॥ १२६ ॥

अत्रोपपत्ति ।



यथा वृत्तान्तःपाति समभुजकोणषड्भुजम् = अ क च ज घ ग, के = तद्वृत्तकेन्द्रम्। यतो वृत्तषडंशपूर्णज्या व्यासार्धसमा, अत के अ = अ क = के च, इत्यादि। ∵ अ के = के क ∴ 'के' बिन्दोः 'अ क' भुजोपरि कृतो लम्बः = केल, तेन अल = लक, $= \frac{\text{केअ}}{2}$

$$\text{अथ केल} = \sqrt{\text{केअ}^2 - \text{अल}^2} = \sqrt{\text{केअ}^2 - \frac{\text{केअ}^2}{4}} =$$

$\sqrt{\frac{3\,\text{केअ}^2}{4}}$। तत्र 'अकेक' त्रिभुजफलम् $= \frac{\text{केल} \times \text{अक}}{2} = \text{केल} \times \text{अल}$

$$= \text{केल} \times \frac{\text{केअ}}{2} \therefore \text{त्रिफ} = \frac{\text{केअ}}{2}\sqrt{\frac{3\,\text{केअ}^2}{4}} = \sqrt{\frac{3\,\text{केअ}^4}{16}}$$

परन्तु एतन्मितानि षट् त्रिभुजानि समषड्भुजक्षेत्रान्तर्गतानि सन्ति, तेन षड्भुजफलम् = त्रिफ६, ∴ $\text{ष.फ} = 6\sqrt{\frac{3\,\text{केअ}^4}{16}} = \sqrt{\frac{36 \times 3\,\text{केअ}^4}{16}}$

$$= \sqrt{\frac{9 \times 3\,\text{केअ}^4}{4}} = \sqrt{\frac{27 \times \text{केअ}^4}{4}} = \text{फ} \therefore \text{फ}^2 = \frac{27 \times \text{केअ}^4}{4}$$

$$\therefore \text{फ}^2 = \frac{27 \times \text{केअ}^4}{4} \therefore \frac{\text{फ}^2 \times 4}{27} = \text{केअ}^4 = \text{भुज}^4 \therefore \sqrt[4]{\frac{\text{फ}^2\,4}{27}} =$$

भुज, इत्युपपन्नं सर्वम्॥

अथवा तद्वेदाद्—

अष्टाच फलाद्वर्गो भक्तस्तत्पदात्पदम्।
व्यासो भवेद्वृद्धिनिघ्नोऽसौ भुजोऽन्यासोऽथ वाऽजनिताम्?२७
व्यासनमूलाग्रात् स्वाङ्कुण्डे भुजान्तरम् ?२।५३।
व्यासोऽङ्गुलान्मकरन्धार्य (२२।४६)
सम्यक् शिवपण्डितोदितः॥ १२८॥

अत्रोपपत्तिः ।

पूर्वश्लोकोक्त्या भुजः $= \sqrt[४]{\frac{४ फ^२}{२७}}$, परन्तु तत्र भुज $=$ त्रि $= \frac{व्या१}{२}$

$\therefore$ २भुज $=$ व्या, तेन, व्या $= २ \sqrt[४]{\frac{४ फ^२}{२७}} = \sqrt[४]{\frac{१६ \times ४ फ^२}{२७}}$

$\because$ $२^४ = १६$ । व्या $= \sqrt[४]{\frac{(८ फ)^२}{२७}}$ । इत्युपपद्यते पूर्वार्धम् । ।

अथवा पूर्वानीतोऽसौ भुजो द्विघ्नस्तदा व्यासो भवेदिति स्फुटं क्षेत्रमितिज्ञानाम् ।

अथ यत्र एकहस्तात्मकमुपश्रेढे फलम् $=$ ५७६ अं, अतः $फ^२ =$ ३३१७७६, तेन, भु $= \sqrt[४]{\frac{४ फ^२}{२७}} = \sqrt[४]{\frac{४ \times (३३१७७६)}{२७}} = \sqrt[४]{\frac{१३२७१०४}{२७}} =$ १४ । ५३ एवं व्यासोऽपि ॥
(अं व्यं)

**एवमष्टास्रकुण्डस्य फलं पञ्चाद्रिसंगुणम् ।**
**त्रिपञ्चविहृतं तस्य मूलं व्यासो भवेद्ध्रुवम् ॥१२६॥**
**शून्यं द्वाविंशतिस्त्यूनषष्टिः सावयवो गुणः ।**
**तद्गुणो व्यास एवात्र भुजः स्यादष्टकोणके॥१३०॥**



अत्रोपपत्तिः ।

वृत्तान्तर्गतसमाष्टास्रकुण्डे तु भुजः शरनेदलवपूर्णज्यासमः ।

वृत्तकेन्द्रात् भुजाग्रद्वयगते त्रिज्ये चेत्येवमष्टौ त्रिभुजानि तत्र वर्त्तन्ते । तत्रैकस्य तावत्फलमानीयते, अथ यथा केकअ त्रिभुजम् । अत्र केक त्रिज्योपरि 'अ' बिन्दुतो 'अन' लम्बः शरवेदांशज्यासमः $=\sqrt{\frac{१}{२}\text{त्रि}^{२}}$ । भूमिः = केक = त्रि । ∴ 'लम्बगुणं भूम्यर्धं'मित्यादिना त्रिभुजफलम् $=\frac{१}{२}\text{त्रि}\sqrt{\frac{१}{२}\text{त्रि}^{२}}=\sqrt{\frac{१}{८}\text{त्रि}^{४}}=\text{त्रि. फ}$,

∴ इदमष्टगुणं जातं सकलाष्टास्रफलम् $=८\,\text{त्रि. फ}=८\sqrt{\frac{\text{त्रि}^{४}}{८}}$

$\text{फ}=\sqrt{\frac{६४\,\text{त्रि}^{४}}{८}}=\sqrt{८\,\text{त्रि}^{४}}$

$\therefore \text{फ}^{२}=८\,\text{त्रि}^{४}\quad \therefore २\text{फ}^{२}=१६\,\text{त्रि}^{४}$

$\therefore \sqrt[४]{२\text{फ}^{२}}=\sqrt[२]{\text{फ}\sqrt{२}}=२\text{त्रि}=$ व्यासः । अत्र $\sqrt{२}=\frac{१४१४२}{१००००}=\frac{७०७१}{५००}=\frac{७५}{५३}$, तदोत्थापनेन $\sqrt[२]{\text{फ}\frac{७५}{५३}}=$ व्या

इत्युपपन्नम् ।

अथ तत्राष्टास्रे भुज. = पूज्या $\frac{४५}{२}$ = कअ । अत्र नक = उज्या ४५ $=$ त्रि − कोज्या ४५, परन्तु ज्या४५ = कोज्या४५ $=\sqrt{\frac{\text{त्रि}^{२}}{२}}=\frac{\text{त्रि}}{\sqrt{२}}$

$\therefore$ उज्या ४५ $=\text{त्रि}-\frac{\text{त्रि}}{\sqrt{२}}=\frac{\text{त्रि}\sqrt{२}-\text{त्रि}}{\sqrt{२}}$

२२८८६०००००००, अस्यासन्नमूलम् = १५१३१३, अयं गुणपद-तुल्यच्छिन्नकस्तदाऽऽसन्नमूलम् $= \frac{१५१३१३}{५३००} =$ २८ । ३३, इत्युपपन्नम् । एवं भुजः = व्या ( ०० । २२ । ५३ )
= ( २८ । ३३ ) ( ०० । २२ । ५७ ) = १० । ५५, इति ॥

**अथ पद्मार्धकुण्डे तु स्वफलं गुणितं च तत् ।**
**शून्याङ्गवह्निभि३६०,र्वह्निवेदसागर४४३भाजितम् १३२॥**
**तन्मूलं व्याससमानं स्यादतश्चाष्टास्रवद्भुजः ।**
**एकहस्ते च पद्माख्ये व्यासो बाहुस्तथाऽङ्गुलैः ॥ १३३ ॥**

अत्रोपपत्तिः ।

द्रष्टव्यं तावत् पुरस्तात्तत्स्वरूपम् । तत्र प्रथममष्टास्रफलं प्रसाध्य, तत एकपत्रफलमष्टगुणं विधाय, तत्र योज्य, तदा सकलपद्मकुण्डफलमिति दिग्दर्शनम् ।

तत्र पूर्वश्लोकोपपत्त्याऽष्टास्रफलम् $= \sqrt{८ त्रि^४} = \sqrt{४ \times त्रि^४ \times २}$
$= २ त्रि^२ \sqrt{२} = ४ त्रि^२ \frac{\sqrt{२}}{२} = व्या^२ \frac{\sqrt{२}}{२}$

अथ तद्बहिः पत्रमध्ये, तद्भुजार्धवर्गक्षेत्रं, तथा भुजव्यासवृत्तार्धस्य चतुर्थांशद्वितयम् । तत्र वर्गक्षेत्रफलम् $= \left(भु \frac{१}{२}\right)^२ = \frac{भु^२}{४}$ ...... (१)

अथ वृत्तार्धचतुर्थांशद्वयफलम् $= \frac{वृ फ \times २}{२ \times ४} = \frac{वृ फ}{४} = \frac{भु^२ \sqrt{१०}}{४ \times ४}$ ... (२)

एवम् ( १ ) ( २ ) अनयोर्योगे कृते एकपत्रफलम्
$= \frac{भु^२}{४} + \frac{भु^२ \sqrt{१०}}{४ \times ४}$, इदमष्टगुणं सकलपत्रफलम् $= भु^२ २ + \frac{भु^२ \sqrt{१०}}{२}$

$= भु^२ \left( २ + \frac{\sqrt{१०}}{२} \right)$ अनेन युतमष्टास्रफलं जातं सकलपद्मकुण्ड-

$$\text{फलम्} = \text{फ} = \text{व्या}^{३}\,\frac{\sqrt{२}}{२} + \text{मुं}^{३}\left(२ + \frac{\sqrt{१०}}{२}\right) \text{। अत्र}$$

$$\sqrt{२} = \frac{१४१४२}{१००००} \text{।} \sqrt{१०} = \frac{३१६२२}{१००००}$$

$$\therefore \text{फ} = \text{व्या}^{३}\,\frac{१४१४२}{२\times१००००} + \text{मुं}^{३}\left(२ + \frac{३१६२२}{२\times१००००}\right) =$$

$$\text{व्या}^{३}\,\frac{१४१४२}{२००००} + \text{मुं}^{३}\left(\frac{४०००० + ३१६२२}{२००००}\right) = \text{व्या}^{३}\,\frac{१४१४२}{२००००} + \text{मुं}^{३}\,\frac{७१६२२}{२००००} \text{।}$$

$$\text{परन्तु} \because \text{मुं}^{३} = \frac{\text{व्या}^{३}(२ - \sqrt{२})}{४} =$$

$$\frac{\text{व्या}^{३}}{४}\left(२ - \frac{१४१४२}{१००००}\right) = \frac{\text{व्या}^{३}\,५८५८}{४००००} = \frac{\text{व्या}^{३}\,२९२९}{२००००}$$

पूर्वश्लोकोपपत्त्या ।

$$\therefore \text{फ} = \frac{\text{व्या}\,१४१४२}{२००००} + \frac{\text{व्या}^{३}\,२९२९}{२००००} \times \frac{७१६२२}{२००००} =$$

$$\text{व्या}^{१}\left(\frac{२८२८४०००० + २०९७८०८३८}{४००००००००}\right) = \text{व्या}^{१}\,\frac{४९२६२०८३८}{४००००००००}$$

$$= \frac{\text{व्या}^{१} \times ४४३}{३६०}, \therefore \frac{\text{फ}\times३६०}{४४३} = \text{व्या}^{१}, \text{अत उपपन्नं सर्वम्} ॥$$

अथान्यथाऽष्टपत्रैस्तु पद्मकुण्डं वदाम्यहम् ।
शून्य षट्सप्तमनवो गुण. सावयवस्त्वयम् ॥ १३४ ॥
फलात्तद्गुणितान्मूलं भुजमानं प्रजायते ।
सोऽष्टास्र यामगुणकोद्धृतो व्यासो भवेद्ध्रुवम् ॥ १३५ ॥
तथैकास्रस्तपद्मान्ये भुजः सावयवस्त्वयम् (७।३६।४५)
व्यासस्चापं द्वयातिरस्तेऽप्येवं साम्यं विचक्षणै. ॥ १३६ ॥

अथ तावत् द्वितीयपद्मकुण्डस्य प्रकारान्तरं निगद्यते ।

$= \frac{\text{व्यां}\sqrt{३}}{२} + ८\,\text{पत्रफ.}$ ।

अथ पत्रफलं तावत् साधनीयम् । तत्रावलोकनीयं तत्क्षेत्रम् ।

तत्पत्रे तु, समत्रिबाहुकमेकं त्रिभुजम्, तत्पार्श्वे चापखण्डद्वयञ्चेति ।

तत्र वृत्तस्य षडंशखण्डे चापफले त्रिभुजफलं विशोध्य शेषमेकपार्श्वगतचापखण्डफलम् । तत्र यदि पुनस्तच्चापफलं योज्यं तदा सम्पूर्णपत्रफलं भवेदयोर्द्विघ्नचापफले त्रिभुजफलनूनं सदैव पत्रफलम्

$= २\,\text{चा. फ} - \text{त्रि}$ ।

तत्र $\because \text{चा} = \frac{\text{वृ}}{६}, \therefore \frac{\text{वृ.फ.}}{६} = \text{चा.फ.}$ । अथ $\text{वृ.फ.} = \frac{\text{व्यां}\sqrt{१०}}{४}$

$\text{त्रि.फ.} = \frac{\text{भुं}\sqrt{३}}{४}$, तथा $\because \text{व्या} = २\text{भु}. \therefore \text{वृ फ} = \frac{४\,\text{भुं}\sqrt{१०}}{४}$ –

$\therefore २\,\text{चा फ} = \frac{२ \times ४\,\text{भुं}\sqrt{१०}}{४ \times ६} = \frac{\text{भुं}\sqrt{१०}}{३}, \therefore \text{पत्रफ} =$

$\frac{\text{भुं}\sqrt{१०}}{३} - \frac{\text{भुं}\sqrt{३}}{४} = \text{भुं}\left(\frac{४\sqrt{१०} - ३\sqrt{३}}{१२}\right)$

$\because \sqrt{१०} = \frac{३१६२२}{१००००}$ तथा $\sqrt{३} = \frac{१७३२०}{१००००}$,

$\therefore \frac{\text{भुं}}{१२}\left(\frac{३१६२२ \times ४}{१००००} - \frac{३ \times १७३२०}{१००००}\right) = \frac{\text{भुं}}{१२}\left(\frac{१२६४८८ - ५१९६०}{१००००}\right)$

$= \frac{\text{भुं} \times ७४५२८}{१२००००}$

स्वल्पान्तरत्वात् $\frac{\text{भुं}\,२३२९}{३७५०} = \text{प.फ.}$, अनेन [illegible]

∴ [illegible] $= \frac{\text{व्यां}\sqrt{३}}{२} + \frac{\text{भुं}\,२३२९}{३७५०}$

$$=\frac{\text{व्या}^{२}\,१४१४२}{२००००}+\frac{\text{भु}^{२}\,२३२९}{३७५०},\ \text{अत्र}\ \because\ \text{भु}^{२}=\frac{\text{व्या}^{२}\,२९२९}{२००००}$$

$$\therefore \frac{\text{भु}^{२}\,२००००}{२९२९}=\text{व्या}^{२},\ \text{अनेनोत्थापनात्}\quad \text{प. कु. फ}$$

$$=\frac{\text{भु}^{२}२००००\times१४१४२}{२९२९\times२००००}+\frac{\text{भु}^{२}\,२३२९}{३७५०}=\text{भु}^{२}\left(\frac{१४१४२}{२९२९}+\frac{२३२९}{३७५०}\right)=$$

$$\frac{\text{भु}^{२}(५३०३२५००+६८२१६४१)}{१०९८३७५०}=\frac{\text{भु}^{२}(५९८५४१४१)}{१०९८३७५०}$$

$$\therefore \text{भु}^{२}=\frac{\text{फ}\times१०९८३७५०}{५९८५४१४१}=\text{फ}(००।०६।०७।१४)$$

$$\therefore \text{भु}=\sqrt{\text{फ}(००।०६।०७।१४)}$$ इत्युपपन्नं भुजानयनम् ।

शेषं सुगमं पूर्वोपपत्तिसाधनान्तर्गतत्वादुपेक्षितम् ॥

**अथ समपञ्चास्रकुण्डे फलाद्व्यासानयनमाह—**

**फलं पञ्चास्रकुण्डोत्थं खनागेन्दुगुणं, हृतम् ।**
**नगाभ्रभूमिभिर्लब्धात् पदं व्यासो भवेदिह ॥ १३७ ॥**
**शून्यं,पञ्चागनगो,भूपाः(००।३५।१६)गुणःसावयवस्त्वयम्**
**तद्गुणो व्यास एवात्र भुजः स्याद्गणितेन वै ॥ १३८ ॥**
**अथैकहस्तपञ्चास्रे आसन्नपदतस्त्विह ।**
**व्यासो (१।१९) भुजो (१८।१८) भवेन्नून, मथ समास्र-**
**कुण्डके ॥ १३९ ॥**

अत्रोपपत्तिः ।




तत्र 'अ क न घ ग' पञ्चास्रे तु $\because \frac{३६०}{५}=७२^{\circ}$ $\therefore$ भुज $=$ अक $=$ पूज्या$७२^{\circ}$ $=$ २ज्या$३६^{\circ}$ । केउ $=$ कोज्या$३६^{\circ}$ । अथ केअक त्रिभुज फलम् $=$ त्रि.फ. $=\frac{\text{अक}\times\text{केक}}{२}=$

$$\frac{\text{२ ज्या ३६,}\times\text{को ज्या३६}}{\text{२}}=\frac{\text{२ज्या३६,}\times\text{कोज्या३६,}\times\text{त्रि}}{\text{२ त्रि}}=\frac{\text{ज्या ७२,}\times\text{त्रि}}{\text{२}}$$

इद पञ्चगुण सकलपञ्चास्रफलम् $=\text{फ}=\dfrac{\text{५ ज्या७२}\times\text{त्रि}}{\text{२}}$ अत्र "त्रिभज्यया सगुणिते क्रमेण द्विशैलषट्त्रिंहिलवज्यके स्तः" इति मदीयटीकास्थपद्यबलात् ज्या७२ = त्रि ( ०० । ५७ । ४ )

$$\therefore\ \text{फ}=\frac{\text{५ त्रि}\times\text{त्रि}\,(\text{००।५७।४})}{\text{२}}=\frac{\text{५त्रि}^{\text{२}}(\text{००।५७।४})}{\text{२}}$$

$$=\frac{\text{५त्रि}^{\text{२}}\times\text{१७१२}}{\text{३६००}}=\frac{\text{त्रि}^{\text{२}}\,\text{४}\times\text{४२८}}{\text{७२०}}=\frac{\text{व्या}^{\text{२}}\times\text{४२८}}{\text{७२०}}=\frac{\text{व्या}^{\text{२}}\text{१०७}}{\text{१८०}}$$, अतो-

विलोमेन $\text{व्या}^{\text{२}}=\dfrac{\text{फ १८०}}{\text{१०७}}\ \therefore\ \text{व्या}=\sqrt{\dfrac{\text{फ १८०}}{\text{१०७}}}$, इत्युपपन्न १३७ श्लोक ।

अथात्र भुज = अक = २ज्या३६ = २ × त्रि (०० । ३५ । १६) तदुपर्युक्तटीकास्थपद्येनेति ।

= व्या ( ०० । ३५ । १६ ) इत्युपपन्न १३८ श्लोक ।

अथैकहस्तात्मकफले पञ्चास्रे, $\text{व्या}=\sqrt{\dfrac{\text{५७६}\times\text{१८०}}{\text{१०७}}}=$ $\sqrt{\dfrac{\text{१०३६८०}}{\text{१०७}}}$ = ३१ । ०९ आसन्नमूलानयनविधिना ।

तथा भु = व्या (००।३५।१६)=(३१।०९) (००।३५।१६) = १८ । १८ इत्युपपन्न सर्वम् । अथ सप्तास्रकुण्डके इत्यस्यापि सम्बन्धोऽस्ति ॥

अथ सप्तास्रकुण्डे व्यासभुजयोरानयनम्—

फलाच्छून्याम्बरार्कघ्नात् भूद्विनागहृतात् पदम् ।
व्यासो भवेद्धि सप्ताश्रे भुजोऽप्येवं ततः स्फुटः ॥ ४० ॥

शून्यं, षड्विंशति, र्भूमिः, षड्बाणा, गुणकोऽस्त्वयम् ।
तद्वृत्तव्यासो भुजश्चात्र दोर्व्यासौ चैकहस्तजौ ॥ १४१ ॥

अत्रोपपत्ति ।

तत्र समसप्तास्रे तु भुज. = पूज्या $\frac{\text{३६०}}{\text{७}}$ = पूज्या (५१।२५।४३)

अत्र तु पष्ठित्रिज्याया ज्या $\frac{\text{३६०}}{\text{१४}}$ = ज्या (२५।४२।५१।३०) = २६।१।५६,

इय द्विगुणा जाता पूज्या $\frac{\text{३६०}}{\text{७}}$ = भुज = ५२ं। ३ं। ५२

अत इष्टसप्तास्रव्यासार्धे भुज = $\frac{\text{(५२।३।५२) ज्या}}{\text{६०} \times \text{२}}$ =

(००।२६।१।५६) ज्या, अत उपपद्यते १४१म श्लोक ।

अथ भुजो भूमि, भुजाग्रद्वयगते त्रिज्ये भुजौ, एतादृशात्रिभुजानि तत्र सप्त विद्यन्ते, तत्रैकफलम् = फ = $\frac{\text{भुज}}{\text{२}}$ × कोज्या $\frac{\text{३६०}}{\text{१४}}$ =

$\frac{\text{भु}}{\text{२}}$ × ज्या(००।२७।०२।३०) अत्र ∵ $\frac{\text{भु}}{\text{२}}$ = ज्या (००।१३।००।५८)

∴ फ = ज्या ( ००।१३।००।५८ ) ज्या ( ००।२७।०२।३० )
= ज्या² ( ५।५१।३६ ) इद सप्तगुण तदा जात सप्तास्रक्षेत्रफलम्
= ज्या (४१।०३) = ज्या² $\frac{\text{८२१}}{\text{१२००}}$ ∴ $\frac{\text{स फ १२००}}{\text{८२१}}$ = ज्या² । अस्य मूल व्यास इत्युपपन्न १४० श्लोक इति ॥

इति कुण्डगणितप्रकार ॥

अथ तत् ( कुण्ड ) साधनप्रकारः ।

वृत्तकुण्डं निजव्यासदलभ्रमणतो भवेत् ।
अर्धचन्द्रं निजव्यासदलवृत्तस्य खण्डकम् ॥ १४२ ॥

अत्र वृत्तकुण्डं वृत्ताकारम्, अर्धचन्द्रकुण्डं तु वृत्तार्धरूपम् । तेनोपपन्नमेव सर्वम् ॥

**त्रिचतुःपञ्चषट्सप्ताष्टास्रकुण्डेषु विस्तृतेः ।**
**अर्धेनादौ लिखेद्वृत्तं, कार्याः स्वस्वविभागकाः ॥१४३॥**
**समाश्चैकैकका रेखाः प्रतिभागं धृतौ, ततः ।**
**पूर्णज्यावच्च तेन स्यात् स्वस्वकुण्डास्रकाकृतिः ॥१४४॥**

यावत्कोणकं कुण्डमभीष्टं तावत्संख्यकाः साधिततद्व्यासोत्पन्नवृत्तस्य समाः विभागा विधेयाः । ततः प्रथमविभागान्तात् द्वितीयविभागान्तं, द्वितीयतस्तृतीयान्तं, तृतीयान्ताच्चतुर्थान्तमेवं पूर्णज्याबन्धनेन तदभीष्टकुण्डाकृतिर्जायते । किं विशेषपल्लवितेनेति दिक् ॥

अथवा तदेवाह—

**संलग्ना या भुजा वृत्ते देयास्तद्व्यतस्त्विह ।**
**स्वस्वास्राकृतिजं कुण्डं यजमानाङ्गुलैर्भवेत् ॥ १४५ ॥**
**ज्ञाते भुजे, वृतावत्र विभागा अप्रयोजकाः ।**
**विभागज्ञानतश्चैवं भुजास्ते चाप्रयोजकाः ॥ १४६ ॥**

अथवा कुण्डगणितेन इष्टकुण्डस्य भुजव्यासावानीय, व्यासेनादौ वृत्तं निर्माय, तत्र यस्माच्चिद्बिन्दुतो भुजमिता पूर्णज्या दत्वा, पुनस्तदग्रात्तन्मिता पूर्णज्या देया, पुनस्तदग्रादेव वृत्ते तदिष्टकुण्डं जायते । अत्रेष्टकुण्डस्य भुजे ज्ञाते, भुजतुल्यपूर्णज्यादानात् तदग्रतः पुनस्तद्दानात्कुण्डरचनायां न कापि तद्विभागसंख्याज्ञानप्रयोजनं, यत आदानेन तत्तत्कुण्डस्य भिन्नभिन्नभुजमानान्यानीतानि । अथ चेद्विभागज्ञानमस्ति यथा किल पञ्चास्रकुण्डरचनाऽभीष्टा तदा वृत्तस्य पञ्चविभागाः कार्यास्तत्र विभागान्तेषु पूर्णज्याबन्धनेन तत्कुण्डमुत्पद्यते एव, नहि भुजप्रमाणस्य किमपि प्रयोजनं तत्रेति स्पष्टम् ॥

अथ योनिकुण्डरचनामाह—

**समत्रिभुजवत् पूर्वं कृत्वा तुल्यं त्रिबाहुकम् ।**
**योनिकुण्डे ततो बाहुत्रयमध्याद्भुजाद्बहिः ॥ १४७ ॥**

मण्डलार्धत्रयं लेख्यं बाह्वर्धभ्रमणादिह ।
एकार्धवृत्तमध्याच्च पार्श्वयोस्तद्भुजाग्रगे ॥ १४८ ॥
कार्ये रेखे, च तत्सक्ते चापे त्यक्त्वाऽवशेषकम् ।
योनिकुण्डं भवेदाद्यमश्वत्थदलयोनिभम् ॥ १४९ ॥




अत्रादौ 'अ ग इ' समत्रिबाहुक त्रिभुज कृत्वा, ततो भुजत्रयमध्यात् बहिर्भागे भुजार्धव्यासार्धेन वृत्तानि कृत्वा, कस्यापि वृत्तार्धस्य यथा ग उ इ वृत्तार्धस्य 'उ' मध्यात् उ ग, उ इ रेखे कार्ये, तदा ग न उ, इ न उ वृत्तखण्ड समाप्य, शेष उगक अघइ अश्वत्थदलाकार योनिकुण्ड भवेत् ॥

अथ द्वितीययोनिकुण्डमाह—

एवं व्यासार्धमानेन वृत्तं कृत्वा, चतुर्भुजम् ।
भुजतुल्यभुजैस्तत्र स्वेष्टकोणाच्च पार्श्वयोः ॥ १५० ॥
भुजार्धकेन्द्रतो वृत्त-दले बाह्वर्धमानतः ।
कार्ये भुजाद्बहिश्चान्ययोनिकुण्डं च तद्भवेत् ॥१५१॥




अत्र द्वितीययोनिकुण्डसाधितव्यासार्धेन वृत्त निरूप्य तद् तत्तद्भुजप्रमाणेन समचतुर्भुज अगकम, विधेयम्, अत्र कल्पित इष्टकोण =ग, तत्पार्श्व-स्थितयो अ ग, ग क, भुजयोरुपरि बहि अइग, गउक वृत्तार्धे विधेये, तदा मअइगउक = योनिकुण्ड सिद्धम् । अत्र फलानयने वृत्तार्धद्वय मिलित्वा वृत्तमेक सकल, तथा वर्गक्षेत्रयो यत तयो फलयोग एव योनिकुण्डफलम् ॥

अथाष्टास्रकुण्डरचनामाह—

पूर्वं व्यासभुजाभ्यां च यथोक्ताऽष्टास्रकं लिखेत् ।
ततस्तद्बाहुखण्डेन बाहुघात् केन्द्रतः किल ॥ १५२ ॥
वृत्तार्धं बाहुतश्चोर्ध्वं विलिखेदासमन्ततः ।
तद्वि तुल्यचतुर्भागं कृत्वा, चापतृतीयकौ ॥ १५३ ॥

विभागान्तौ च यौ, ताभ्यां तद्बाहुदलमानतः ।
भ्रमणान्मत्स्यमुत्पाद्य, तन्मुखं वृत्ततो बहिः ॥ १५४ ॥

यदस्ति, तद्गते ताभ्यां विभागाभ्यां च रेखिके ।
तद्बाहुखण्डतुल्ये, च समन्तात् तेन तद्भवेत् ॥ १५५ ॥

अष्टपत्रात्मकं कुण्डं पद्माढ्यं पद्मवच्छुभम् ।
व्यक्ताव्यक्तोपपत्त्यैव सिद्धं सूक्ष्मं मयोदितम् ॥ १५६ ॥

अथादौ साधिताष्टास्त्रीयव्यासेन वृत्तं विलिख्य तदन्तः साधिता ष्टास्त्रीयभुजमानेन अष्टास्रं इ प र फ ज ल भ न निर्माय, तथा तावत् इन भुजस्य 'च' अर्धबिन्दौ 'च इ' भुजार्धेन इगउन वृत्तार्धं भुजवाह्यमार्गे विरच्य, तस्य ग, ह, उ बिन्दुषु समाश्चत्वारो विभागा इग=गह=हउ=उन, कार्याः । अथ 'ग' केन्द्रतः ग च भुजार्धव्यासार्धेन, च र वृत्तं, तथा 'उ' तृतीयविभागान्तात् 'उ च' भुजार्धव्यासार्धेन चक्र अ यद्वृत्तं कृत्वा, तयो यत्र बहिः 'क' बिन्दौ योगस्तत्र ग क, उ क रेखे कार्ये, तदा इ ग क उ न पत्राकारं तदष्टास्रक्षेत्राद्बहिर्जातं, एवं सर्वेषु भुजेषु पत्ररचना कार्या, तदाऽष्ट-पत्रात्मकं कुण्डं जातम् ।

अत्र फलानयनेऽभीष्टे प्रथमं वृत्तान्तरष्टास्रफलं प्रसाध्य, ततः

मण्डलार्धत्रयं लेख्यं बाह्वर्धभ्रमणादितः ।
एकार्धवृत्तमध्याच्च पार्श्वयोस्तद्भुजाग्रगे ॥ १४८ ॥
कार्ये रेखे, च तत्सक्ते चापे त्यक्त्वाऽवशेषकम् ।
योनिकुण्डं भवेदाद्यमश्वत्थदलयोनिभम् ॥ १४९ ॥



अथादौ 'अ ग इ' समत्रिबाहुकं त्रिभुजं कृत्वा, ततो भुजत्रयमध्यात् बहिर्भागे भुजार्धव्यासार्धेन वृत्तानि कृत्वा, तस्यापि वृत्तार्धस्य यथा ग उ इ वृत्तार्धस्य 'उ' मध्यात् उ ग, उ इ रेखे कार्ये, तदा ग न उ, इ न उ वृत्तखण्डे समार्ज्य, शेष उगफ अघइ अरउ यदाकारं योनिकुण्डं भवेत् ॥

अथ द्वितीययोनिकुण्डमाह—

एवं व्यासार्धमानेन वृत्तं कृत्वा, चतुर्भुजम् ।
भुजतुल्यभुजैस्तत्र स्वेष्टकोणाच्च पार्श्वयोः ॥ १५० ॥
भुजार्धकेन्द्रतो वृत्त-दले बाह्वर्धमानतः ।
कार्ये भुजाद्बहिश्चान्ययोनिकुण्डं च तद्भवेत् ॥ १५१ ॥



अथवा द्वितीययोनिकुण्डसाधितव्यासार्धेन वृत्तं निरूप्य तत्र तत्तद्भुजप्रमाणेन समचतुर्भुजं अगकख, विधेयम्, अत्र कल्पित इष्टकोण =ग, तत्पार्श्वस्थितयो अग, गक, भुजयोरुपरि बहिः अरग, गउक वृत्तार्धे निधेये, तदा अखकगउक = योनिकुण्डं सिद्धम् । अत्र फलानयनं वृत्तार्धद्वयं मिलित्वा वृत्तमेकं सकलं, तथा समचतुरस्रक्षेत्रं तयोः फलयोग एव योनिकुण्डफलम् ॥

अथाष्टास्रकुण्डरचनामाह—

एवं व्यासभुजाभ्यां च यथोक्तयाऽष्टास्रकं लिखेत् ।
ततस्तद्बाहुखण्डेन बाह्वग्रात् केन्द्रतः किल ॥ १५२ ॥
वृत्तार्धं बाहुतश्चोर्ध्वं विलिखेदास्यमन्ततः ।
तद्धि तुल्यचतुर्भागं कृत्वा, चाद्यतृतीयकौ ॥ १५३ ॥

विभागान्तौ च यौ, ताभ्यां तद्बाहुदलमानतः ।
भ्रमणान्मत्स्यमुत्पाद्य, तन्मुखं वृत्ततो बहिः ॥ १५४ ॥

यदस्ति, तद्गते ताभ्यां विभागाभ्यां च रेखिके ।
तद्बाहुखण्डतुल्ये, च समन्तात् तेन तद्भवेत् ॥ १५५ ॥

अष्टपत्रात्मकं कुण्डं पद्माख्यं पद्मवच्छुभम् ।
व्यक्ताव्यक्तोपपत्त्यैव सिद्धं सूक्ष्मं मयोदितम् ॥ १५६ ॥

अथादौ साधिताष्टास्रीयव्यासेन वृत्त विलिख्य तदन्त साधिता ष्टास्रीयभुजमानेन अष्टास्र इ प र फ ज ल म न निर्माय, तथा तावत् इन भुजस्य 'च' अर्धबिन्दो 'च इ' भुजार्धेन इगउन वृत्तार्ध भुजबहिर्भागे विरच्य, तस्य ग, ह, उ बिन्दुषु समाश्चत्वारो विभागा इग=गह=हउ=उन, कार्या । अथ 'ग' केन्द्रत ग च भुजार्धव्यासार्धेन, च क वृत्त, तथा 'उ' तृतीयविभागान्तात् 'उ च' भुजार्धव्यासार्धेन 'चक' अन्यद्वृत्त कृत्वा, तयो यत्र बहि 'क' बिन्दौ योगस्तत्र ग क, उ क रेखे कार्ये, तदा इ ग क उ न पत्राकार तदष्टास्रक्षेत्राद्बहिर्जात, एव सर्वेषु भुजेषु पत्ररचना कार्या, तदाऽष्ट-पत्रात्मक कुण्ड जातम् ।

अत्र फलानयनेऽर्थं प्रथम वृत्ता-तरष्टास्रफल प्रसाध्य, तत




एकस्मिन् पत्रफले च इ ग, च न उ वृत्तार्धचतुर्थांशयोर्योग $=\frac{\text{वृ फ}}{४}$, तथा गचउक क्षेत्र तु 'ग च' भुजस्य वर्गक्षेत्रमेव । अनयोर्योग

एकपत्रफलम् $=\frac{\text{वृ फ}}{४}+\text{ग च}^{२}$ । परन्तु , गच $=\frac{\text{इ न}}{२}$

∴ १ प. फ $=\frac{\text{वृ फ}}{४}+\frac{१}{४}\text{भु}^{२}$ = इदमष्टगुणं तदा सकलदलफलम् ।

तदष्टास्रफलयुतम् = जातं सकलाग्रफलम् ॥

द्वितीयपद्मकुण्डेऽपि साध्यमष्टास्रकं पुरा ।
तद्भुजाद्यन्तचिह्नाभ्यां व्यासार्धाद्भुजमानतः ॥१५७॥

वृत्तत्रिभागभ्रमणान्मत्स्यं कृत्वाऽथ यद्भुजात् ।
बहिःस्थितं च यन्मत्स्यखण्डं पत्रं तदेव हि ॥ १५८ ॥
एवं प्रतिभुजं पत्रादष्टपत्रोद्भवं किल ।
पद्मकुण्डं भवेद्व्यक्ताव्यक्तवासनया परम् ॥ १५६ ॥




अत्र तावत् खघचछजझञग = अष्टास्र निर्माप्य, तत प्रथम खग भुजोपरि, ग केन्द्रात् गख व्यासार्धेन नखक वृत्त, तथा ख केन्द्रात् खग व्यासार्धेन नगक वृत्तखण्ड विरच्य, खग भुजाद्बहि यत् खकग वज्रखण्ड तदेव पत्राकारं जातमेवं प्रत्येकभुजोपरि पत्ररचना कार्या, तदष्टदलकुण्ड सिद्ध्यति । अत्र कगख बिन्दुत्रयबद्धरेखाभि समत्रिभुजम् । तत्र कख रेखया सह गख रेखा ६० षष्टिभागमितकोण निर्माति । एव नग रेखयाऽपि खग रेखा तन्मित मेव कोण रचयति । तेन कग, गन रेखाभ्या जायमान कोण = १२०, $= \frac{३६०}{३} = \frac{वृ}{३}$, अत नखक, नगक चापयोर्वृत्तत्रिभागमितत्वात् सर्वमनवद्यम् ।

द्व्यादिहस्तेषु कुण्डेषु स्वस्वोक्तभुजविस्तृती ।
कार्ये, ताभ्यां यथोक्त्यैव यजमानाङ्गुलैः किल ॥ १६० ॥
स्वस्वास्राकृतिजान्यत्र कुण्डानि प्रभवन्ति हि ।

द्व्यादिहस्तात्मकफलवत्सु कुण्डेषु कुण्डगणितेन तत्तद्भुजव्यासयोर्माने समानीय, ताभ्यां यथोक्त्या कुण्डसाधनोक्तरीत्या यजमानाङ्गुलैः कुण्डानि त्रिकोणादीनि विरचयेदिति ॥

द्व्यादिहस्तात्मककुण्डेषु फलमूलजिनांशकम् ॥ १६१ ॥
प्रकल्प्य चाङ्गुलं तत्र तैर्यथोक्तप्रकारतः ।
एकहस्तोक्तविस्तारभुजाभ्यामेव साधयेत् ॥ १६२ ॥
वासनाऽनवबोधेन बहुधा शुष्कपण्डितैः ।
कृतं सुस्थूलकुण्डानां साधनं, तन्न मे मतम् ॥ १६३ ॥

अथवा किं भिन्नभिन्नयजमानाङ्गुलभेदैः । अत्र तावत् इच्छितहस्तात्मककुण्डफलमूलस्य जिनांशमितमेकाङ्गुलप्रमाणं प्रकल्प्य ततः पूर्ववद् व्यासभुजाभ्यां कुण्डरचना कर्त्तव्या । यतो जिनांशाङ्गुलैरेकोहस्तो—भवतीति । हस्तात्मकफलं तु हस्तात्मकभुजकोटिवशात् जायते, हस्तात्मकभुजादिमानं जिनमिताङ्गुलमानमितं, तत्र घाते कृते हरे जिनवर्गपतनात् । फलमूलजिनांशकमित्युपपन्नम् । शुष्कपण्डितैः युक्तितत्त्वमर्मानभिज्ञैः कनककर्मकाण्डविधिज्ञैः । शेषं सुगमम् ॥

संवादमेत्युक्तफलेन सम्यक्
तदेवकुण्डं किल सप्रमाणम् ।
नान्यन्मुनीन्द्रोक्तमपीह यस्मात्
प्रत्यक्षसिद्धौ न हि वाक्प्रमाणम् ॥ १६४ ॥

यत् कुण्डफलं, उक्तफलेन संवादं ऐक्यवाक्यतामेति, तदेव सम्यक् समीचीनं सप्रमाणं युक्तियुक्तं किलास्ति । अन्यत् मुनीन्द्रोक्तमपि कुण्डसाधनविधानं सम्यक् न ज्ञेयं निश्चितं । यतः प्रत्यक्षसिद्धौ प्रत्यक्षप्रमाणसिद्धे वस्तुनि वाक्प्रमाणं नहि आवश्यकम् ॥

अन्तर्बहिःकोणभवं तु कुण्डं
　　द्विघ्नस्वसंख्याकभुजैरलीकम् ।
यैरुक्तमष्टास्रमहो कथं तैः
　　त्र्यव्यस्रकं चापि तथाऽऽहृतं न ॥१६५॥
समन्ततः केवलबाह्यकोणैः
　　सिद्धानि बाहुप्रयुतैर्भवन्ति ।
अव्यस्रवत् श्रीपुपडष्टकोणा-
　　न्तं नैमिषस्थो नहि वेत्ति चैवम् ॥१६६॥

अन्तर्मध्ये, बहिर्बाह्ये कोणैरष्टसंख्यैर्भवतीति अन्तर्बहिःकोणभवम्, द्विघ्नस्वसंख्यकभुजैः षोडशसंख्यकभुजैरुपलक्षितमष्टास्रं कुण्डं, अलीकं व्यर्थमेव यैः कैश्चित् उक्तं, तदहो विज्ञ! तैः कथं न तथाऽर्थात् अन्तर्बहिःकोणभवं द्विघ्नभुजयुक्तं त्र्यव्यस्रकं त्रिकोणं, चतुःकोणकं, कुण्डं त्वाहृतमुदीरितम् । यो नियमो माध्यः स सर्वत्रापि । मया तदुक्तपाऽष्टास्रम् ।

अत्र वस्तुतः समन्ततः परितः केवलबाह्यकोणैर्नहि अन्तर्बहिःकोणैरित्यर्थः । तथा च बाहुप्रयुतैश्च सकाशात् सिद्धानि जनितानि अव्यस्रवत् चतुःकोणकुण्डवत् श्रीपुपडष्टकोणान्तं यावत् कुण्डानि भवन्ति । परमेवं नैमिषस्थो रामवाजपेयी कुण्डरत्नाकारो न वेत्ति जानाति।




ग्रन्थकारः—अथ कुण्डवासनोच्यते ।

( तत्रादौ तावच्चतुरस्रकोणकुण्डवासना यथा ।) "समकर्णसमचतुर्भुजक्षेत्रफलमूलं हि तद्भुजः, तत्कर्णो व्यास इति तावत्सुप्रसिद्धम् । तुल्यभुजयोर्वर्गयोगो हि द्विगुणभुजवर्गः । स तु द्विगुणफलतुल्यस्तत्पदं कर्णः, फलमूलं तु भुज इत्युपपन्नं यथोक्तं चतुर्भुजे ॥"

( अथ वृत्ताकृतिकुण्डोपपत्तिः । )

अथ वृत्तफलं तु व्यासवर्गवर्गात् पञ्चगुणादष्टमांशमूलतुल्यमिति तद्विलोमेन व्यासः स्यादित्युपपन्नं यथोक्तं वृत्ते ( वृत्तकुण्डे ) ।

( अथार्धचन्द्रकुण्डोपपत्तिः । )

अथार्धचन्द्रकुण्डं तु वृत्तार्धम्। तत्र द्विगुणफलं वृत्तफलं प्रकल्प्य, तदर्धमर्धवृत्तफलं स्वफलं स्यात्। अतोऽर्धचन्द्रे व्यासो द्विगुणफलात् साध्यः। द्विघ्नफलवर्गः $=\text{फ}^{२}\,४$, अष्टघ्नः $=\text{फ}^{२}\,३२$, पञ्चभक्तः $=\frac{\text{फ}^{२}\,३२}{५}$, अस्य मूलमूलं व्यास इत्युपपन्नं यथोक्तम्।

( अथ समत्रिभुजकुण्डफलम्। )

अथ समत्रिभुजे क्षेत्रे लम्बादुभयतः सजातीयजात्ये भवतः प्रातिलोम्येन तद्योगे चायतं स्यात्, तत्फलं स्वाभिमतं ज्ञातमेव। तत्रायते भुजो भुजार्धं, कोटिस्तु लम्बः, स तु भुजभुजार्धयोर्वर्गान्तरपदरूप इति। मूलग्रहणाद् वर्गद्वारैव भुजकोटिघातरूपायतफले क्रियमाणे फलवर्गोऽयम् $\text{फ}^{२} = \frac{\text{भु}^{४}\,३}{१६}$, विलोमेनात्र फलवर्गो नृपाहतस्त्रिभक्तस्तन्मूलमूलं भुज इत्युपपन्नम् ( श्लो. ११९ )

वृत्ते स चायं भुजस्तु द्विगुणा षष्टिभागज्या। षष्टिभागज्यावर्गरूपमिदम् $= \frac{३\,\text{त्रि}^{२}}{४}$, त्रिज्या तु व्यासार्धमित्येवं वा $\frac{३\times}{४}\left(\frac{\text{व्या}}{२}\right)^{२}$ $=\frac{३\,\text{व्या}^{२}}{१६}$, अत्र मूलं द्विघ्नं, चतुर्गुणितात् मूलं वा तुल्यमिति चतुर्घ्नम् $=\frac{३\,\text{व्या}^{२}\,४}{१६} = \frac{३\,\text{व्या}^{२}}{४}$, तन्मूलं समत्रिभुजभुज इति तद्विलोमेन भुजवर्गाद् वेदहताद् त्रिभक्तात् मूलं, स्वत्र्यंशयुतभुजवर्गात् मूलरूपेण फलितं व्यासः स्यादित्युपपन्नम् ( श्लो. ११२ + $\frac{१}{२}$। ).

यद्वा पूर्वोक्तो भुजोऽयम् $= \sqrt[२]{\frac{\text{फ}^{२}\,१६}{३}}$, अस्य वर्गश्चतुर्गुण-

त्रिभक्तोऽस्य मूलं, वर्गवर्गो वा षोडशगुणो नवभक्तोऽ— $\left(\frac{\text{फं}^{2} \, २५६}{२७}\right)$ स्य मूलमूलं व्यास इति वासनाविदां स्पष्टतरम् ।

अथायमोनिकुण्डे, तु समत्रिभुजमेकं तदेककोणात् पार्श्वयोर्भुजसम-व्यासोद्भवे वृत्तार्धे तथा भुजार्धोद्भवतुल्यचतुर्भुजार्धं चेति तत्फलैक्यं स्वफलं ज्ञातमेव, तत्रान्यरीत्या फलम् । एवं भुजप्रमाणं यावत्तावत् = या १; अस्मात् समत्रिभुजफल = $\frac{\text{या}^{2} १ ( ३ । ४३ । ५५ )}{४}$, वृत्तार्धयो फलम् = $\frac{\text{या}^{2} १ ( ३ । ८ । ४४ )}{४}$ । चतुर्भुजफलम् = $\frac{\text{या}^{2} १}{४}$ । त्र्यैक्यम् = $\frac{\text{याव } १ ( ५ । ५३ । २८ )}{४}$ । इदं स्वफलेन सममिति पक्षौ या$^{2}$१ ( ५ । ५३ । २८ ) = या$^{2}$० फ ४ अत्रान्यक्ताङ्केनाभिन्न फल भाज्यमिति गुणहरो खखार्केर्गुणितौ जातौ गुण ४८०० हारो ७०७३ इत्युपपन्नं यथोक्तम् ।

द्वितीयप्रकारे तु समकर्णतुल्यचतुर्भुजमेकं ( वर्गक्षेत्रम् ) , तदेक-कोणाश्रितभुजयोर्व्यासरूपयोर्ये वृत्तार्द्धे, तदैक्यरूपवृत्तं चेति तत्फलैक्यं स्वफलं ज्ञातमेव, तत्रान्यरीत्या फलमेवं चतुर्भुजकर्णो हि तद्व्यास,— स्तत्प्रमाणं यावत्तावत् = या १, अस्य वर्गार्धं चतुर्भुजफलम् = $\frac{\text{या}^{2} १,}{२}$ अस्य मूलं चतुर्भुजे भुज इति तत्तुल्यव्यासे वृत्तफलम्, = $\frac{\text{या}^{2} १ ( ० । ४७ । २६ )}{२}$ । फलयोर्योग = $\frac{\text{या}^{2} ( १ । ४७ । २६ )}{२}$ स्वफलेन सममिति पक्षौ या$^{2}$ ( १।४७।२६ ) = या० + फं$^{2}$२ ।

अत्रान्यत्राङ्केन द्विगुणं फलं भाज्यमिति गुणहरौ खखाष्टेन्दुगुणौ, गुणहरौ ३६००।३२२६, इत्युपपन्नं यथोक्तम्।

अथ षडस्रभुजो हि सर्वत्र वृत्तव्यासार्धसमः। तत्तुल्य एको भुजो व्यासार्धतुल्यौ च द्वाविति समत्रिभुजम्। तत्तुल्यानि षडस्रवृत्ते भवन्ति। तत्रैकसमत्रिभुजे प्रोक्तवत् फलवर्गोऽयम्। $= \frac{\text{व्यां ३}}{\text{२५६}}$, अस्य षड्घ्नं सर्वफलमित्यथ वा षड्वर्गघ्नं सर्वफलवर्गोऽयम् $= \frac{\text{व्यां २७}}{\text{६४}}$, अतो विलोमेन फलवर्गोऽब्धिषड्गुणो भैर्हृतस्तन्मूलमूलं व्यासस्तदर्धं भुज इति तद्वर्गवर्गं षोडशभक्तं एव कल्पितं फलवर्गोऽब्धिगुणो भैर्हृत इत्युपपन्नम्।

अथाष्टास्रे सार्धद्वाविंशतिभागज्या द्विगुणा भुजोऽस्तीति तावत् सुप्रसिद्धम्। तत्र शरवेदभागज्यावर्गं $= \frac{\text{त्रि}^2}{\text{२}}$, अस्य मूलं शरवेदभागज्या = त्रि ( ००।४२।२६ ) त्रिज्यातः शुद्धा जाता शरवेदभागानामुत्क्रमज्या इयम् = त्रि ( ००।१७।३४ ) " त्रिज्यो मभज्या निहते "— त्रि$^2$ ( ००।१७।३४ ) दलस्य। त्रि$^2$ ( ००।०८।४७ ) मूलं द्विगुणं सा द्विद्विभागज्येति चतुर्गुणदलार्धं त्रि$^2$ (००।३५।१८) मूलं द्विगुणं सार्धद्विद्विभागज्याऽष्टास्रभुजस्या = त्रि ( ००।४५।५४ ) व्यासार्धं त्रिज्ये यत्र षोडशास्रभुज = व्या (००।२२।२७) सर्वत्रैको भुजो, व्यासार्धतुल्यौ च द्वौ भुजाविति त्रिभुजम्। तादृशानि अष्टावत्र भवन्ति। तत्रैकस्य फलम् = व्याव ( ०० । ५ । १८ ) अष्टगुणमष्टास्रे फलम् = व्यो ( ००।४२।०४ )। अत्र पलभज्ञान ( ००।४२।१८ ) भक्त तन्मूलं व्यासः स्यात् अष्टास्रे। तत्र यथोक्त ... निरंशाद्विहत ... व्यास इत्युपपन्नं यथोक्तम्।

अथ पद्मकुण्डे यदष्टास्रं तत्फलमेकं, तथा तद्भुजार्धोद्भवतुल्य-चतुर्भुजान्यष्टसंख्याकान्यष्टास्रे । तत्फलं भुज*वर्ग—द्वि—घात-(२भु२) तुल्यं तथा भुजतुल्यव्यासवृत्तस्य फलाष्टांशरूपविषम-त्रिकोणफलानि षोडशसंख्याकानि द्विगुणतद्वृत्तफलतुल्यानि इति सर्वफलं स्वफलतुल्यं ज्ञातमेव, तत्रान्यरीत्या फलमेवम् । उक्तवदष्टास्रे भुजः = व्या (००।२२।५७) अस्य वर्गः = व्या२ (००।८।४६।४२) वर्गः = व्या२ (००।१।१७।०६) पञ्चगुणः = व्या२ (००।०६।२५।१५) अष्टभक्तः = व्या२ ( ०० । ०० । ४८ । ०९ ) चतुर्गुणस्यास्य व्या२ ( ३ । १२ । ३ ) मूलं भुजतुल्यव्यासवृत्तफलं द्विगुणम् = व्या२ ( ०० । १३' । ५२ । ४२ ) तथा भुजवर्ग–द्वि–घाततुल्य फलम् = व्या२ ( ००।१७।२३।१४ ) तथाऽष्टास्रफलम् = व्या२ (००।४२।१४) । फलत्रययोगः स्वफलमिदम् = व्या२ ( १।१३।५० ) अतो विलोमेन फल,–मेतेन ( १।१३।५० ) भक्तं तन्मूलं व्यासस्तत्र सवर्णितो हरः सुखार्थं गृहीतः ४४३० । तेन फलस्य गुणो ३६० हरः ४४३ चे-त्युपपन्नं यथोक्तम् । अत्रैकहस्तपद्मे फलं गुणगुणं हरभक्तं व्यासवर्गः = ४६८।५। एतन्मूलं व्यासः = २१ । ३८ । ७ भुजश्च ८ । १६ । ३१ अष्टास्रफलम् = ३२० । ४६ । ४४ चतु० १३६ । ५७ । ३७ वृत्त० १०८ । १६ । १३ ।

अथ द्वितीयपद्मकुण्डोपपत्तिः ।

अष्टास्रभुजसम्भूतात् समत्रिभुजतः फलम् ।
द्विगुणाष्टास्रकभुजात् व्यासाद्वृत्तफलं तु यत् ॥
तत्षडशमितं चान्यत् फलं, चान्तरकं तयोः ।
युक्तं षडंशकफले, पद्मस्यैकं फलं भवेत् ॥
तदष्टघ्नं भवेत् पद्मे तत्राष्टास्रफलं युतम् ।

---

* भुजवर्गो–द्विमानयोर्घाततुल्यं, नहि भुजवर्गस्य द्विघाततुल्यमिति भ्रमः कार्यः ।

यथोक्तमेन पत्राल्ये फलं तत् सकलं यथा ॥

एकहस्ते चैकपत्रे त्रिभुजस्य फलम् = २५।२६।४२।२५ तथा 'फल वृत्तस्य पष्ठांशे ३०।५७।४२।२० तथा तद्विवरोद्भवम् ५।३०।५९।५५।

तत्पडशकयोगैकपत्रजम् = ३।२८।४२।१५ चाष्टक गुणम्।
पद्मे पत्राष्टकफलं २९१।४९।३८। भवेत् तत्, तेन सद्युतम्॥
यदष्टास्रफल तत् तु सूक्ष्म पद्मफल भवेत्।
यथेप्सितं हि तत्सिद्धिरव्यक्तगणितात् यथा॥

अत्राष्टास्रभुजप्रमाणं यावत्तावदेकम् =या १। त्रिभुजफलवर्गः = यां १ (००।११।१५)। अस्य मूलम् =यां (००।२५।५९) वृत्तपडशफलवर्गः =यां (०० । १६ । ४०) अस्य मूल फलम्= यां (००।३१।३७) फलान्तरम्=यां (००।०५।३८)। वृत्तपडंशफलेन युतमेकपत्रफल = यां (००।३७।१५)। अष्टमपत्रजम् = यां (४।५८)। अथाष्टास्रफलं भुज.=य १, हरेणानेन(००।२२।५७)भक्तो व्यास. = $\frac{\text{या १}}{\text{६००।२२।५७}}$ । व्यासवर्गः = $\frac{\text{यां १}}{\text{६०।०८।४६}}$, अयं त्रिपञ्चगुण. पञ्चादिभक्तः फलम् = यां (४।५०।११) अष्टाप्ते। इदमष्टपत्रजफलेन युतं जात पद्मकुण्डफलम् = यां (९।४८।११) अतः फलम्, (९।४८।११) अनेन भक्त भुजवर्गमान स्यात्। अत्र संचारः। हरेऽस्मिन् रूपं गुणस्तदा रूपमिते हरे को गुण इति लब्धो गुण. = (०।६।७।१४) तद्गुणितकुण्डफलस्य भुज इत्युपपन्नम्।

अथ पद्मांशे द्विगुणा षट्त्रिंशदंशज्या भुजोऽस्ति। षट्त्रिंशज्या = त्रि (००।३५।१६।) वा, व्या = (००।१७।३८)। इयं द्विगुणा पद्मांशे भुज. = व्या (००।३५।१६) अत्र तत्तुल्य-भूमौ व्यासार्धतुल्यभुजाभ्यां योऽन्तस्त्रस्तद्भुमयतत्फलयोरैक्यादायतभुपाय

तत्फलं फलपञ्चमांशरूपं पञ्चगुणं च पञ्चाश्रे फलं स्यात् । तत्र भुजार्धं भुजः = ज्या = (००।१७।१८)। व्यासार्धं कर्णः, तद्वर्गान्तरमूलं लम्बः = ज्या (००।२४।१७)। आयते लम्बः कोटिर्भुजार्धं भुजः इति तद्घाते फलम् = ज्या² (००।०७।०८) आयते। पञ्चघ्नं स्व-फलम् = ज्या² (००।३५।४०)। अतो विलोमेन फलमनेन (००।३५।४०) भक्तः व्यासवर्ग इति सवर्णितो हरो गृहीतः = २१४० तेन फलस्य गुणः = ३६००। हरश्च = २१४०। विंशत्याऽपवर्तनात् गुणहरौ १८० । १०७ वेत्युपपन्नं यथोक्तम्।

द्विगुणा वृत्तमन्वंशज्यका ५२।३।५७ सप्ताश्रके भुजः।
षष्ठ्या व्यासार्धतः स्वीयगुणव्यासार्धतोऽस्त्ययम्। ज्या(००।२६।१।५६)
भूर्भुजोऽत्र भुजौ व्यासखण्डतुल्यौ त्रिबाहुके।
सप्ताश्रे तत्फलं कुण्डे, फलं ज्या² (००।४१।३०) स्यात् तेन तत्फलम्॥
अनेन ००।४१।०३ व्यस्तयाप्तं व्यासः स्यात् तत्पदं किल।
हरे त्वस्मिन् = ७१ गुणश्चायम् = १२००, इत्यस्ति फलवासना॥
अथवा कुण्डक्षेत्रफलं स्वगुणगुणितं तन्मूलं भुजो व्यासश्च।
सूक्ष्मासन्नतया ग्राह्यं मूलमासन्नसंज्ञकम्।
वस्तुभूतपदज्ञप्त्यै कार्यं रेखात्मकं पदम्॥
अथेष्टाभृताया करण्याश्च लब्धं तथेष्टं तयोरल्पकं चोत्क्रमज्याम्।
प्रकल्प्याथ लब्धाङ्कष्टाङ्कयोगात् दलेनात्र वृत्तं लिखेत् तद्दलौ हि॥
प्रदत्तोत्क्रमज्या च तन्मध्यसूत्रे ततस्तत्क्रमज्या च रेखात्मिका या।
तदेव स्वरेखात्मकं मूलमत्र भवेत् तत्करण्याश्च कुण्डादिसिद्ध्यै॥
करण्युत्थितात् स्वेष्टलब्ध्योः करण्योरपीह प्रसाध्ये पदे रेखिकाख्ये।
तयोरल्पिका चोत्क्रमज्या प्रकल्प्य तदैक्यार्धविस्तारखण्डोत्थवृत्ते॥
यथोक्तया क्रमज्यात्मिका रेखिका स्यात् करण्यास्तदेवास्ति मूलस्य मूलम्।
इष्टाभीष्टभेदात् पदेनैव भेदो मनोदिव्यमार्गैस्तु तद्विचार्यम्॥"

**वा.भा....** अथेष्टोद्धृताया इत्यस्य युक्तिः । अवर्गाङ्कस्य चेन्मूलमपेक्षितं तदा तन्निरवयवमूलाभावात् तन्मूलद्योतनार्थं करणीति प्राचीनैः संज्ञा कृता । तत्र येनाङ्केन भक्ता करणी निःशेषा स्यात् तस्य तल्लब्धेश्चानयोर्योगतुल्यव्यासोत्पन्नवृत्ते तद्धरलब्ध्योरल्पतरमुत्क्रमज्यां प्रकल्प्य या क्रमज्या सैव करण्या मूलमिति ।



यथा करणी $=$ अ, इष्टम् $=$ अग

तत्र $\because$ $\frac{\text{अ}}{\text{अग}} = \text{गच}$, $\therefore$ अ $=$ अग $\times$ गच,

अत्र 'अग $+$ गच' एतन्मितव्यासे अकचघ वृत्तम् । तत्र अग $\times$ गअ $=$ कग $\times$ गघ $=$ घग$^2$ (३।१४)

$\therefore$ $\sqrt{\text{अग} \times \text{गअ}} = \sqrt{\text{अ}} = \text{घग}$, इत्युपपन्नं सर्वम् ।

कुण्डानां भुजत्यागगुणकाः ।

| चतुर्भुजम् | वृत्तकुण्डम् | अर्धेन्दुकम् | त्रिभुजम् | प्र. को. कुण्डम् | त्रि. को. कुण्डम् | पञ्चास्रम् | षडस्रम् | प्र. पञ्चकुण्डम् | त्रि. पं. कुण्डम् | पद्मास्रम् | सप्तास्रम् | कुण्डानि । |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १<br>०<br>० | ०<br>०<br>० | ०<br>०<br>० | २<br>१८<br>३३ | ००<br>५०<br>४३ | ०<br>५३<br>३० | ०<br>२३<br>१० | ०<br>१२<br>२४ | ०<br>७<br>४ | ०<br>६<br>७ | ०<br>३५<br>२१ | ०<br>१६<br>३० | भुजगुणकः |
| २<br>०<br>० | १<br>१५<br>२३ | २<br>३१<br>४७ | ३<br>४<br>[illegible] | ०<br>५४<br>५७ | १<br>७<br>[illegible] | १<br>३२<br>५० | १<br>२४<br>२४ | ०<br>५८<br>५६ | ०<br>४१<br>[illegible] | ०<br>४०<br>२६ | १<br>२७<br>५१ | त्यागगुणकः |

अथोपसंहरति—

इमानि कुण्डानि मयोदितानि
स्वापांगमभोकदिवि स्थितानि ।
शुद्धावनौ धाम्नुसमीकृतायां

कार्याणि तज्ज्ञैरिह सत्फलार्थम् ॥ १६७ ॥
यथोदितक्षेत्रफलस्य साम्य-
प्रदर्शनार्थं तु ममैष यत्नः ।
कुण्डस्य होमार्थमिहाथ तत्र-
त्योऽन्यो विशेषः सुधियाऽन्यतन्त्रात् ॥ १६८ ॥

स्वर्पागमे वेदब्राह्मणादौ प्रोक्ता कथिता या दिग् तस्यां स्थितानि तदभिमुखानि यानि इमानि कुण्डानि मया उदितानि उक्तानि, तानि सत्फलार्थं श्रुतिस्मृत्युदितजफलप्राप्त्यर्थं अम्बुना जलेन समीकृतायां शुद्धावनौ शङ्कुलोष्ठकीलकादिरहितभूमौ, वा पवित्रभूमौ तज्ज्ञैर्बुधैः कार्याणि । यथोदितक्षेत्रफलस्य मानेन अभीष्टकुण्डफलस्य साम्यप्रदर्शनार्थं ममायं यत्नोऽस्ति । इह तत्रत्यः कुण्डीयो यो विशेषोऽवशिष्टः स च पण्डितेनान्यतन्त्रात् कुण्डार्क-कुण्डप्रभाकरादितो ज्ञातव्य इति ।

तत्र तावत् कुण्डप्रभेदेन फलभेद उक्तः पुरश्चर्यार्णवे द्वितीयतरङ्गे—

"अनेकदोषं वै कुण्डं मानं न्यूनाधिकं यदि ।
तस्मात् सम्यक् परीक्ष्येदं कर्त्तव्यं शुभमिच्छता ॥" इति मेरुतन्त्रात् ।

अथ फलानि तत्रैव कार्यभेदेनोक्तानि ।

सर्वसिद्धिकरमग्रुभिकोणं, पुत्रदं मनसिजावसथाभम् । ( योनि )
अर्धचन्द्रसदृशं शुभदं स्या,—दग्निकोणमरिवर्धनहेतुः ॥
शान्तिकर्मणि भवेत् सुवर्तुलं, छेदमारणकरं षडस्रकम् ।
पद्मकुण्डमिह वृष्टिकारकं रोगशान्तिकरमष्टकोणकम् ॥

अथ वर्णभेदेन कुण्डभेदमाह—

चतुरस्रं विप्राणां, राज्ञामिह वर्त्तुलं कुण्डम् ।
वणिजामर्धशशाङ्काकारं त्र्यस्रं तु शूद्राणाम् ॥
चतुरस्रं सर्वेषां प्रशस्तमिति केचिदाहुराचार्याः । इत्यादि ।
विशेषविषयजिज्ञासुभिः पुरश्चर्यार्णवो विलोकनीयः ।

इति कुण्डविचारः ॥

इत्थं हि जीवाऽऽनयनप्रभेदैः
प्रत्यंशजज्यानयनं विधाय।
षष्ठि-त्रिभज्यान्तरतो विलेख्याः
प्रत्यंशजीवा व्यवहारसिद्ध्यै ॥ १६९ ॥

अत्र षष्टित्रिभज्यान्तरतः षष्टितुल्यत्रिज्यान्तराले, शेषं सुगमम्।

अथेष्टांशात्मकचापानां ज्याऽऽनयनमाह।

अथात्र जीवाऽऽनयने भुजांशाः
ये, तज्ज्यका कोष्ठगताऽस्ति सिद्धा।
श्रमं विनैवानयनोद्यतानां
ज्योतिर्विदां ज्यागणितोपलब्ध्यै ॥ १७० ॥

तनाद्यधश्चेत् कलिकादिकं स्या-
त्तदीन भोग्यान्तरखण्डकघ्नम्।
षष्ट्या हृतं तद्युतयातजीवा
जीवा भवेत् साऽभिमता सुखार्थम् ॥ १७१ ॥

अत्र चापेभ्यो जीवाऽऽनयनमिष्टं तदा ये भुजांशास्ते यदि केवल-
मंशात्मकास्तदा तदंशसङ्ख्यककोष्ठगता तज्ज्योज्यैति सिद्धैव।

अथ चेत्कलादिका अपि तदग्रेऽवयवा भवेयुस्तर्हि तावत् तदंश-
सङ्ख्यककोष्ठगताङ्कान् एकत्र विन्यस्य तत षष्टिकलाभिर्गतैष्यान्तरं तदा
शेषावयवकलाभिः किमिति लब्धं पूर्वविन्यस्ताङ्केषु संयोजितं सत् इष्टांश-
ज्या भवेदिति सुगमम्।

अथेष्टजीवायाश्चापानयनमाह।

या ज्या विशुद्धा भवति ज्यकाङ्कात्
तच्चापमंशात्मकमस्ति सिद्धम्।
शेषं तु षष्ट्या गुणितं विभक्तं
ज्यकान्तरेणात्र कलादि लब्धम् ॥ १७२ ॥

युतं तथाद्यं भवतीह चापं
कलीकृतं तद्धि कलात्मकं स्यात् ।
क्रमज्ययोर्या क्रमशिञ्जिनीह,
षष्ट्यच्युता कोटिभवक्रमज्या ॥ १७३ ॥
स्यादुत्क्रमज्या, यदि खण्डकानि
भुक्तांशखण्डैक्यवशात् यथोक्तया ।
क्रमज्यका सा क्रमखण्डकैः स्या-
द्विलोमखण्डैरिह चोत्क्रमज्या ॥ १७४ ॥

अत्र इष्टज्यकाङ्कात् या ज्या ज्याङ्कमितिर्विशुद्धा भवति तदीय चापलवमान तत्कोष्ठगत सिद्ध पठितमेवास्ति । तत्र चेत् शेष ततोऽनुपात यदि पूर्वापरज्यकान्तरेण षष्टिकला लभ्यन्ते तदा शेषेण किमितिफल कलात्मक, तेन युत पूर्वसिद्धलवमान, अभीष्टचापमान स्यादिति स्पष्टम् ।

अत्र ∵ त्रि=६०, अत कोटिज्ययोना षष्टि., उत्क्रमज्या भवतीति किं चित्रम् ।

तथा यदत्र भुक्ताशखण्डैक्यवशात् एकाशोत्तरोत्तरवशात् ज्यानामन्तरखण्डानि यथोक्तया साधितानि तदा योजितै क्रमखण्डकै सा क्रमज्या, तथा योजितैर्विपरीतखण्डैरिह उत्क्रमज्या स्यादिति स्पष्टम् ।

अथ भास्करोपरि साक्षेपमाह ।

शिरोमणौ ज्यकाभोग्यखण्डं स्पष्टं कृतं तु यत् ।
स्थूले सूक्ष्मत्वविश्वासात् तदर्थं किञ्चिदुच्यते ॥ १७५ ॥
अन्वयव्यतिरेकाभ्यां चेत् स कोटेः क्रमज्यया ।
अनुपातः कथं नो स तथा कोट्युत्क्रमज्यया ॥ १७६ ॥
तुल्यन्यायात् भवेन्नेन त्रिज्यार्धमतिसूक्ष्मतः ।
कोटिज्यकानुपातेन राशिज्या नैव सिद्ध्यति ॥ १७७ ॥
सिद्धभोग्ययुतिद्वारा सर्वभोग्ययुतावपि ।
एवं त्रिभज्यका नैव किं च सन्धौ तु खण्डयोः ॥ १७८ ॥

योगस्तु राशिज्यामितो नैव भवति । वस्तुत एतानि तात्कालिकस्पष्टभोग्यखण्डानि जीवानयनाय भास्करैर्नानीतानि । भट्टेन तदाशयमबुद्ध्वैव व्यर्थं तदुपरि दोषाक्षेप क्रियते । तथा चैव पदान्ते सकलतादृशस्पष्टभोग्यखण्डकानां योगस्य त्रिज्याधिकत्वात् अतएव "राशित्रयज्या त्रिज्यामिता, नैवेति"— पश्यता भट्टेन तन्मते दोषो निपात्यते । इति ।

अथैव शेषांशे शून्ये "यातैष्ययो खण्डकयोर्विशेष शेषांशनिघ्नो-नखह" दिति शून्यमेव फल तेनोनयुत गतैष्यैक्यदल तदा गतैष्यैक्यदलतुल्यमेव स्पष्टभोग्यखण्ड सिद्धम् । तत्र तु भट्टमतेन गतमेव खण्ड केवल दृश्यते, अत इदमपि तन्मते बाधितमेवेति ।

कोटिज्यकानुपातस्य स्थूलत्वाद् भोग्यखण्डके ।
ज्यासिद्धावल्पबुद्ध्या तु यत् कृतं मौढितस्त्वया ॥१८०॥
तत् त्याज्यं भोग्यखण्डस्य स्पष्टताकरणं खलु ।
त्यक्त्वा सूक्ष्माणि खण्डानि बलात् सुस्थूलखण्डकैः १८१॥
इष्टज्यानयनं तेऽस्ति तदैवं स्पष्टखण्डकम् ।
यातैष्यखण्डभेदघ्नं शेषं खण्डांशकैर्भजेत् ॥ १८२ ॥
तदूनं भुक्तमेवास्ति भोग्यं स्पष्टं भवादृशाम् ।
नास्मादृशामिदं सूक्ष्मज्यकाखण्डकसाधनात् ॥ १८३ ॥

भोग्यखण्डके कोटिज्यानुपातस्य स्थूलत्वात् ज्यासिद्धौ, अल्पबुद्ध्या, त्वया मौढितो दार्ढ्यात् यत् स्पष्टभोग्यस्य स्पष्टताकरण कृत, तत् त्याज्यम् । अत्र सूक्ष्माणि ज्यान्तररूपाणि खण्डानि त्यक्त्वा बलान्निजाग्रहेण स्थूलखण्डकैः यदि ते इष्टज्यानयनमिष्टमस्ति तदैव स्पष्टखण्ड साध्यम्—

यथा खण्डांशकैर्गतैष्यान्तर लभ्यते तदा शेषांशै किमिति फलेनोनं भुक्त भवादृशां पक्षे भोग्य स्पष्टमस्ति । अस्मादृशां सूक्ष्मज्यकाखण्डसाधनात् तादृशमिदं नास्ति, अत्र भट्ट एव भ्रान्त इति ।

इति ज्याऽऽनयनविधिः ।

—:o:—

## अथ स्पष्टीकरणम् ।

अथोच्यते मया सूक्ष्मं स्फुटकर्म सवासनम् ।
पूर्वं यादृक् च सिद्धान्ते गदितं रविणा स्वयम् ॥ १८४ ॥

अथ ज्यासाधनानन्तरं सवासनं सोपपत्तिकं सूक्ष्मं स्फुटकर्म मया कमलाकरेणोच्यते । पूर्वं कृतान्ते स्वयं आत्मनैव रविणा सिद्धान्ते किन्तु सूर्यसिद्धान्ते यथाच यादृक् गदितम् ।

अथ पूर्वकदितस्यापि पुनः कथने हेतुमाह—

जिष्णुजार्यभट-भास्कर-मुख्यै-
रन्धपूरुपपरम्परयाऽत्र ।
वासना निजधिया निजतन्त्रे
नाशिताऽर्करचितानवबोधात् ॥ १८५ ॥

तत्खगेन्द्रोचितगोलसंस्थां
ज्ञात्वैव योक्ता स्फुटता यथार्थम् ।
मुन्यर्चिता श्रीरविणाऽथ सैवो-
च्यते यतोऽन्यैर्गदिता न सम्यक् ॥१८६॥

अत्र स्पष्टीकरणे जिष्णुजो ब्रह्मगुप्त, आर्यभट- प्रसिद्ध एव कुसुमपुरनिवासी, तथाऽन्योऽपि लघ्वार्यभटेति सञ्ज्ञया विदित, भास्करो भास्कराचार्य, एतैरन्धपूरुपपरम्परया परप्रत्ययनेयमत्या तर्कशून्यधिया च स्वस्वग्रन्थे सूर्यरचितस्य सिद्धान्तस्यानवबोधात् स्पष्टीकरणवासना नाशिता, अर्थात्ते केऽपि सम्यक् स्पष्टीकरणं न विदु ।

अत्र तत्खगोचितगोलसंस्था ज्ञात्वाऽनुनाव्य यथार्थं मुन्यर्चिता शाकल्यादिभि मुनिभिरर्चिता सादरमुररीकृता या एव स्फुटता श्रीरविणा उक्ता सा एव मयोच्यते, यत सा स्फुटता अन्यै सम्यक् नोदिता । अनेन तत्कथनमत्यावश्यकमिति सूचितम्, अथ चाहमेव सूर्यांशाय सर्वथा जानामीति भाव ।

अथ मन्दपरिधीनाह—

**रवेर्मन्दपरिध्यंशास्त्रयोदश कला,-स्तथा। ( १३ । ४० )**
**खसागरा,-श्चतुस्त्रिंशद्विलिप्ताढ्यास्तथा विधोः ।१३।४०।३४**
**परिध्यंशाः कुरामाश्च, कलाः सप्तार्णवास्तथा । ३१।४७।२२**
**द्विद्वितुल्यविलिप्ताश्च तथाऽऽरपरिधेर्लवाः ॥ ४ । १८८ ।**
**एकलिप्तोनसार्धाग्निपर्वता बोधनस्य तु ॥ ७३ । २९ ।**
**इषुलिप्ताढ्यनागाश्विलवा देवगुरोस्तथा ॥ २८ ॥ ५ । १८९॥**
**मुनिलिप्ताढ्यदन्तांशा भृगुजस्य लवा मताः । ३२ । ७**
**शनेः षडश्विलिप्ताढ्यसप्ताब्ध्यंशाश्च मान्दजाः ॥ १९० ॥**

मन्दान्त्यफलज्यया वृत्तं मन्दपरिधिः । तत्रैतेरव्यादीनां ग्रहाणां भवन्ति ।

**ओजान्तपरिधेर्भागवर्गाद्भांशवर्गतः ।**
**तत्परिध्यंशवर्गोनैर्भांशवर्गाङ्कैर्हृतात् ॥ १९१ ॥**
**पदं सदैकरूपास्ते मान्दाः स्युः परिधेर्लवाः ।**
**ओजान्तव्यत्ययादित्थं बीजोक्त्या ह्यत्र वासना ॥१९२॥**

अत्रत्योपपत्तिः शेषवासनायां भट्टेनोक्ताऽपि सा उपस्थित्यै लिख्यते—

यथा स्थिरपरिधिमानम् $= \text{या } 1$, $\therefore \text{ज्यार्थं} = \dfrac{\text{त्रि} \times \text{या}1}{\text{भांश}}$ । परन्तु विषमपदान्ते $\therefore \text{कर्ण}^2 = \text{त्रि}^2 + \text{ज्या}^2\text{अ}$ $\therefore \text{कर्ण}^2 = \text{त्रि}^2 + \dfrac{\text{त्रि}^2 . \text{या}^2 . 1}{\text{भांश}^2} = \dfrac{\text{त्रि}^2 \times \text{भांश}^2 + \text{त्रि}^2 . \text{या}^2 1}{\text{भांश}^2} = \text{त्रि}^2 \left( \dfrac{\text{भांश}^2 + \text{या}^2}{\text{भांश}^2} \right)$, अथ स्थिरपरिधितो विलोमानुपातादोजान्तपरिधिः $= \text{ओप} = \dfrac{\text{स्थिप} \times \text{त्रि}}{\text{क}}$,

$\therefore \text{स्थिप} = \text{या } 1 = \dfrac{\text{ओप} \times \text{क}}{\text{त्रि}}$ $\therefore \text{या}^2 = \dfrac{\text{ओप}^2 \times \text{क}^2}{\text{त्रि}^2}$

$$= \frac{\text{ओप}^{2}(\text{माश}^{2}+\text{यो}^{2}1)\text{त्रि}^{2}}{\text{माश}^{2}\times\text{त्रि}^{2}} = \frac{\text{ओप}^{2}(\text{माश}^{2}+\text{यो}^{2}1)}{\text{माश}^{2}}$$

$$\therefore \text{यो}^{2}\times\text{माश}^{2}=\text{ओप}^{2}\cdot\text{माश}^{2}+\text{ओप}^{2}\,\text{यो}^{2}1 \quad \therefore \text{यो}^{2}(\text{माश}^{2}-\text{ओप}^{2})=\text{ओप}^{2}\cdot\text{माश}^{2}$$

$$\therefore \text{या}1 = \frac{\text{ओप}^{2}\,\text{माश}^{2}}{\text{माश}^{2}-\text{ओप}^{2}}$$ , इत्युपपन्न सनम् ।

अथ शैघ्रपरिधीनाह—

**इष्वग्निदस्रा इथग्निभुवो द्विशैलाः खर्त्तुदस्त्रकाः ।**
**खाब्धयः परिधेर्भागाः शैघ्र्या भौमात् फलाप्तये ॥१६३॥**

कु. = २२२ । बु = १३२ । वृ = ७२ । शु = २६० । श = ४०

फलाप्तये शीघ्रफलसाधनाय शेषं स्पष्टम् । अत्र शीघ्रान्त्यफलज्यया

वृत्त शीघ्रपरिधि°, तत्र $\frac{३६० \times \text{ज्याशीघ्रफ}}{\text{त्रि}}$ = शी॰प॰ इति ।

अथ स्थलविशेषेण तेषां न्यूनाधिक्यतामाह—

**ओजान्तेऽर्कोदिताश्चैते युग्मान्ताद् अधिका गुरौ ॥**
**सैकाः शनौ, ज्ञारसितेष्वेकत्रिद्व्यूनिताः क्रमात् ॥ १६४॥**

प्रोक्ता एते शीघ्रपरिधिभागा ओजान्ते विषमपदान्ते ज्ञेया, ते युग्मान्ताद्द्व्यधिका अनेन युग्मपदान्ते प्रोक्तास्ते न्यूना सन्तो भवेयुर्गुरोरिति स्पष्टमत्रागमप्रमाणं वा प्रत्यक्षवेधविधिरेव साक्षी । एवं शनिशीघ्रपरिधौ तु युग्मान्तात् विषमपदान्तमेकाधिका, तथा बुधस्य एकोनिता°, कुजस्य त्र्यूनिता, शुक्रस्य द्व्यूनिता इति स्पष्टम् ।

अथान्त्यफलज्यारूपमाह—

**मध्यकक्षाव्यासदलं त्रिज्या यन्मानतः किल ।**
**तन्मानात् परिधेर्व्यासदलं स्यान्त्यफलज्यका ॥ १६५ ॥**

यन्मानतो यन्निश्चित्या मध्यकक्षाव्यासदलं त्रिज्या किलास्ति, तन्मानात् पठितपरिधेर्व्यासदलमन्त्यफलज्येति स्पष्टम् ।

अथ मन्दान्त्यफलज्यामाह—

द्व्यं, नृपाः, पञ्चवेदा, मन्दान्त्यफलजज्यका ।
रवे,-स्तथेषवोऽत्यष्टिस्त्रीषवो हिमदीधितेः ॥ १९६ ॥
साङ्घ्र्यर्कप्रमिता भौमे, त्रिन्यंशाः पवना बुधे ।
गुरौ बाणा द्वियमलाः, षडंशोनद्व्यं कवेः ॥ १९७ ॥
शनेरष्टौ शरा मान्दाः क्रमादन्त्यफलज्यकाः ।
तथैवाष्टाग्नयः शून्यसागरा भूभवस्य च ॥ १९८ ॥
तथा द्विद्विमिताश्चान्द्रेस्तथाऽर्कप्रमिता गुरौ ।
तथा त्र्यंशरामाब्धिप्रमिता भार्गवे तथा ॥ १९९ ॥
ऋतवः खाब्धयः सौरे शीघ्रान्त्यफलजज्यका ।
भांशात्रिज्याप्रमाणेन परिधेरनुपाततः ॥ २०० ॥

अत्र मन्दान्त्यफलज्याः—

र० २ । १६ । ४५, च० ५ । १७ । ५३, मं० १२ । १५, बु० ६ । ४०, बृ० ५ । २२, शु० १ । ५४, श० ८ । ५ ।

अथ शीघ्रान्त्यफलज्याः—

मं० ३८ । ४०, बु० २२ । ००, बृ० १२, शु० ४३ । २०, श० ६ । ४० ।

∵ ३६० : त्रि :: प : अंफज्या, ∴ $\frac{\text{त्रि} \times \text{प}}{\text{३६०}}$ = अंफज्या,

इत्युपपन्नम् ।

अथ केन्द्र-पद-भुजादिपरिमाणमाह—

यद्युनेन शुद्धो ग्रहस्तस्य केन्द्रं
भवेत्, त्रित्रिभैरेकमेकं पदं स्यात् ।
अयुग्मं तु, युग्मं, क्रमात् तानि चक्रे
भवन्तीह चत्वारि दोःकोटिसिद्ध्यै ॥ २०१ ॥

**अयुग्मे पदे यात,-मैष्यं तु युग्मे**
**भुजो,-बाहुहीनं त्रिभं कोटिरुक्ता ।**

यत् येन मान्देन शीघ्रेण वा उच्चेन शुद्धो ग्रहस्तस्य मान्दस्य शीघ्रस्य केन्द्रं भवेत्, वा यत् यस्योच्चेन यो ग्रह ऊनस्तस्य ग्रहस्य तत्केन्द्रमिति । त्रिभि-स्त्रिराशिभिरेकैकं पदं भवति, तत्राद्यं विषम, द्वितीयं युग्ममेव तृतीयं विषमं चतुर्थं युग्ममिति चक्रे चत्वारि पदानि ।

∵ १पद = ३रा, ∴ ४पद = ४ × ३रा = १२रा = चक्र,

तत्र प्रथमपदे गत भुज, द्वितीये ऐष्य भुज, चापज्या चापो-नमार्द्धशिञ्ज्ययो समत्वात् । एव तृतीये गत भुज । चतुर्थे ऐष्य भुज-भुजोना नवति कोटिर्भुजस्येति । एव भुजज्यावर्गोनितत्रिज्यावर्गतो मूल कोटिज्या, भुजज्योनिता त्रिज्या कोट्युत्क्रमज्या, कोटिज्योनिना त्रिज्या भुजोत्क्रमज्या, शेष त्रिकोणमित्या ज्ञातव्यमिति सर्वम् मृदूच्चेन हीनो-ग्रहो मन्दकेन्द्रमित्यादि भास्करोक्तमत्स्फुटम् ।

---

अथ भुजफलसाधनमाह—

तत: स्वस्वकेन्द्रोत्थदो:कोटिजीवे
परिध्यंशनिघ्न्यौ विभक्ते च भांशैः ॥२०२॥
क्रमात् स्वस्वदो:कोटिसंज्ञे फले स्तः
फलान्त्यज्यया वा हते त्रिज्ययाऽऽप्ते ।
त्रिभज्योद्भवं दोःफलं यद्यथोक्त्या
फलान्त्यज्यकैवेह वेद्या बुधैः सा ॥२०३॥




अत्र क्षेत्ररचनाविधिर्विद्यमाराैः (२५२श्लो—२६२श्लो·) एवैर्ज्ञातव्यः, तत: 'ग्रहोच्चान्तरं केन्द्रम्' इति जाते—

उम = केन्द्रांशाः, वा ढम = केन्द्रांशाः । तदा केछ = ज्याके, तथा मछ = कोज्याके, केम = त्रि· । अथ 'केमछ' 'ममल' त्रिभुजयोः साजात्यात्—

$$\frac{\text{छके}}{\text{केम}} = \frac{\text{मल}}{\text{मम}}, \therefore \frac{\text{छके} \times \text{मम}}{\text{केम}} = \text{मल}, \text{ वा } \frac{\text{ज्याके} \times \text{ज्यांअंफ}}{\text{त्रि}} =$$

भुजफलम् ।(१)। एवम् $\because \frac{\text{मछ}}{\text{केम}} = \frac{\text{मल}}{\text{मग्र}} \therefore \frac{\text{मछ} \times \text{मग्र}}{\text{केम}} = \text{मल}$, वा

$\frac{\text{कोज्याके} \times \text{ज्याश्रफ}}{\text{त्रि}}$ = कोटिफलम् । अत्र यदा ज्याक = त्रि, तदा (१)

स्वरूपे $\frac{\text{त्रि} \times \text{ज्याश्रफ}}{\text{त्रि}}$ = ज्याश्रफ, अत्र $\because \frac{\text{परिधि}}{\text{भाश}} = \frac{\text{ज्याश्रफ}}{\text{त्रि}} \therefore$

$\frac{\text{ज्याके} \times \text{ज्याश्रफ}}{\text{त्रि}} = \frac{\text{ज्याके} \times \text{परिधि}}{\text{भाश}}$ = भुजफलम् । एवं कोफ =

$\frac{\text{कोज्याके} \times \text{ज्याश्रफ}}{\text{त्रि}} = \frac{\text{कोज्याके} \times \text{परिधि}}{\text{भाश}}$, अत उपपन्नं सर्वम् ।

श्लोकोऽयं भास्करस्य 'स्वेनाहते परिधिना' इत्यादिपद्यवदस्ति ।

अथ कर्णानयनमाह—

मृगादिकर्क्यादिगते च केन्द्रे
स्वकोटिजीवान्त्यफलज्ययोश्च ।
योगोऽन्तरं कोटिरिहाथ दोर्ज्या
भुजस्तयोर्वर्गयुतेः पदं स्यात् ॥ २०४ ॥
श्रुतिस्तथा कोटिफलत्रिमौर्व्यो-
र्योगोऽन्तरं चात्र यथोक्तकेन्द्रे ।
कोटिश्च तद्दोःफलवर्गयोगा-
न्मूलं स एव श्रवणो भवेद्धि ॥ २०५ ॥

मृगादिकेन्द्रे कोटिज्यान्त्यफलज्योर्योगः, कर्क्यादौ केन्द्रे तयोरन्तरं स्पष्टा कोटिः, उभयत्र दोर्ज्या भुजः, तयोर्वर्गयोगमूलं कर्णः । तथा कोटिफलत्रिज्ययोर्योगो मृगादौ स्पष्टा कोटिः, कर्क्यादौ तु तयोरन्तरं स्पष्टा कोटिः, स्वभुजफलं भुजः, अनयोर्योगमूलं स एव कर्णः, पूर्वस्पष्टकोटिभुजाभ्यामपरभुजकोट्योर्भेदादपि कर्णः स एवेत्यर्थः ।

अत्रोपपत्ति ।

द्रष्टव्य पूर्वक्षेत्रम् । तत्र मृगादौ 'केमछ' त्रिभुजे केम = कर्ण कुमध्यप्रतिमण्डलस्थखेटान्तरे, इति अत्र मछ = कोटि = मम + मछ = अफज्या+कोज्याके, भुज = छके = ज्याके । एवं कर्कादिकेन्द्रे कर्ण = केइ $= \sqrt{\text{केछ}^2 + \text{छइ}^2} = \sqrt{(\text{छअ}-\text{अइ})^2 + \text{छके}^2}$ $= \sqrt{(\text{कोज्याके}-\text{अफज्या})^2 + \text{भुफ}^2}$, अत उपपन्न प्रथमप्रकार ।

द्वितीयप्रकारे मृगादौ केन्द्रे 'केमल' त्रिभुजे स एव कर्ण = केम $= \sqrt{\text{केल}^2 + \text{मल}^2} = \sqrt{(\text{मके}+\text{मल})^2 + \text{मल}^2}$ $= \sqrt{(\text{त्रि} + \text{कोफ})^2 + \text{भुफ}^2}$, एवं कर्कादौ केन्द्रे— कर्ण = केइ $= \sqrt{\text{केत}^2 + \text{तइ}^2} = \sqrt{(\text{केअ}-\text{अत})^2 + \text{तइ}^2}$ $= \sqrt{(\text{त्रि}-\text{कोफ})^2 + \text{भुफ}^2}$, इत्युपपन्न सर्वम् ।

अथ शीघ्रफलसाधनमाह ।

केन्द्रस्य दोर्ज्या गुणिता कृतान्त्य-
फलज्यया, कर्णहृताऽऽप्तचापम् ।
सूक्ष्मं फलं स्याद्गुणितौ हि मध्य-
स्फुटान्तरं शून्यशरे ग्रहस्य ॥ २०६ ॥

त्रिज्याहतं दोःफलमेव कर्णा-
द्धृतं तु तथापमितं फलं वा ।
सुसूक्ष्ममित्थं मृदुशीघ्रमार्यै-
र्निःसंशयं कार्यमिदं ब्रह्मैः ॥ २०७ ॥

त्रिज्याहतः कर्णहृतः कृतश्चेद्-
यथोक्त आद्यः परिधिः स्फुटः स्यात् ।
तत्साधितं दोःफलचापमेव
फलं भवेद्दोःफलेन तुल्यम् ॥ २०८ ॥

त्रिज्याहृता कर्णहृतैव दोर्ज्या
स्फुटा भवेत्तां परिगृह्य वा स्यात् ।
यथोक्तदोःफलचापमेव
फलं यथोक्तेन फलेन तुल्यम् ॥ २०९ ॥

त्रिज्याहृता कर्णहृता कृतान्त्य
फलज्यकैवात्र भवेत् स्फुटाख्या ।
यत् तद्वशाद्दोःफलचापमेतत
सूक्ष्मं फलं योक्तफलेन तुल्यम् ॥ २१० ॥

स्पष्टार्थौ श्लोकौ । अत्रोपपत्तय —

द्रष्टव्य पूर्वक्षेत्रमत्रापि । तत्र कक्षावृत्ते स्पष्ट मन्दस्पष्टग्रहान्तर शीघ्रफलम् । तत्र ∵ प = स्पष्टग्रह , म = मन्दस्पष्टग्रह , ∴ मप = शीघ्रफलम्, ∴ मर = ज्याशीफ ।

अथ पेग्रज, केमर त्रिभुजयो साजात्यादनुपातेन शी.फ = मर =
$\frac{\text{ग्रल} \times \text{केम}}{\text{पेग्र}} = \frac{\text{भुफ} \times \text{त्रि}}{\text{कर्ण}}$, अत्र ∴ भुफ = $\frac{\text{ज्याशीके} \times \text{ज्यान्त्यफ}}{\text{त्रि}}$

∴ शीफ= $\frac{\text{ज्याशीके} \times \text{ज्यान्त्यफ} \times \text{त्रि}}{\text{कर्ण} \times \text{त्रि}} = \frac{\text{ज्याशीके} \times \text{ज्यान्त्यफ}}{\text{कर्ण}}$

अत उपपन्नम् ।

वा पेमन्त्र, भमर त्रिभुजयोरेव साजात्यात् ∵ $\frac{\text{पेन्त्र}}{\text{पभ}} = \frac{\text{मर}}{\text{भम}}$, ∴

$\frac{\text{पेन्त्र} \times \text{भम}}{\text{केम}} = \text{मर} = \frac{\text{ज्याशीके} \times \text{ज्यान्त्यफ}}{\text{कर्ण}}$, इत्युपपन्नं २०९पद्यम् । (१)

अथवा पेग्रल, पेमर त्रिभुजयो साजात्यात् मर = $\frac{\text{ग्रल} \times \text{पेम}}{\text{पेग्र}} =$
$\frac{\text{भुफ} \times \text{त्रि}}{\text{कर्ण}}$, इत्युपपन्नं २१० पद्यम् । (२)

अथवा अत्र "स्वेनाहते परिधिना भुजकोटिजीवे" इत्यादिना

शीघ्रभुजफलम् $= \frac{\text{ज्याशीके} \times \text{प॰}}{३६०}$, ततः ज्याशीफ $= \frac{\text{शीभुफ} \times \text{त्रि}}{\text{कर्ण}}$

$= \frac{\text{ज्याशीके} \times \text{प॰} \times \text{त्रि}}{३६० \times \text{कर्ण}} = \frac{\text{प} \times \text{त्रि}}{\text{कर्ण}} \times \frac{\text{ज्याशीके}}{३६०}$,

अत्र $\frac{\text{प} \times \text{त्रि}}{\text{कर्ण}}$ = स्प॰प॰ कल्पितं, तदा ज्याशीफ= $\frac{\text{स्पप} \times \text{ज्याशीके}}{३६०}$

= स्प॰ प॰ स॰ भुजफलम्, अत उपपन्नं २०८ पद्यम्। ( ३ )

अथवाऽत्रैव ज्याशीफ= $\frac{\text{ज्याशीके} \times \text{प} \times \text{त्रि}}{३६० \times \text{कर्ण}} = \frac{\text{ज्याशीके} \times \text{त्रि}}{\text{कर्ण}} \times \frac{\text{प}}{३६०}$

$= \frac{\text{ज्यास्प के} \times \text{प}}{३६०}$ = स्प॰प॰ज॰भु॰फ, अत उपपन्नम् २०९

पद्यम्। ( ४ )

अथात्र ज्याशीफ $= \frac{\text{ज्याशीके} \times \text{त्रि} \times \text{ज्याभ्रफ}}{\text{त्रि} \times \text{कर्ण}} =$

$\frac{\text{त्रि} \times \text{ज्याभ्रफ}}{\text{कर्ण}} \times \frac{\text{ज्याशीके}}{\text{त्रि}} = \frac{\text{स्पभ्रफ} \times \text{ज्याशीके}}{\text{त्रि}}$,

अत उपपन्नम् २१० पद्यम्। ( ५ ) अतः सर्वमनवद्यम्।

अथ पुनः शीघ्रफलमाह।

त्रिज्याहता कर्णहृता भुजज्या
तच्चापबाह्वोर्विवरं फलं वा।
ज्ञेयोऽत्र बाहुः प्रतिमण्डलस्य
पूर्वोदिताङ्घ्रिपदैः स चैवम्॥ २११॥
चापं तु यत् स्यान्त्यफलज्यकाया-
स्त्रिभं युतोनोनयुतं तु तेन।
पदानि तानीह भवन्ति तेषु
बाहुश्च पातैष्यमयुग्मयुग्मे॥ २१२॥




अत्रोपपत्तिः ।

शीघ्रफलं तु शीघ्रस्पष्टकेन्द्रांशान्तरतुल्यम् । यथा मउ − रउ = मर = शीफ, अत्र मउ = शीकेंश = कउ, अथ केफल, केरइ त्रिभुजयो साजात्यात्

$$\frac{\text{फल}\times\text{केर}}{\text{केफ}} = \text{रइ} = \frac{\text{ज्याशीके}\cdot\text{त्रि}}{\text{स्पके}} =$$

स्पकेज्या, अस्याश्चापम् = रउ, अतोऽस्य मउ अस्यचान्तरं शीघ्रफलं स्पष्टमेव ।

अथ यदि ग्रह 'य' बिन्दौ भवेत् तदा ज्यास्पके = $\frac{\text{त्रि}\times\text{ज्याशीके}}{\text{त्रि}}$ यतोऽत्र त्रि = कर्ण, अतः ज्यास्पके = ज्याशीके, तेन स्पके = शीके ततः शीफ = ०, परमिदमतीवायुक्तं अतोऽत्र शीके = उवय, स्पके = उय, प्राग्वत् । अनयोरन्तरे कृते फलमुत्पद्यते एव, तेन उवयच = प्रथमपदफलम् । नहि उक्तं मितम्, अत्र ∵ यच = अफ ∴ ९० + अफ = प्र. प, चन = ९० − अफ = द्वि प, ९० − अफ = तृ. प, ९० + अफ = चप, शेषं सुगममेवेति सर्वमुपपन्नम् । अथ प्रकार " भास्करीय,—त्रिज्याहता कर्णहृता " इत्यादियदस्ति ।

पदेऽद्रजातं सकृदुक्तमित्थम्
　　स्वधामकृत् तत्समसूक्ष्ममेवम् ।
कर्णानुपातात् स्फुटतां विनाय
　　सर्वत्र यद्दोःफलचापमद्य ॥ २१३ ॥
तथासकृत् साधितमेव सूक्ष्मम्
　　सकृद्यथोक्तेन फलेन तुल्यम् ।
एवं यथाऽत्रैव सकृत्प्रकारा-
　　दपि स्वमान्दं किल दोःफलं स्यात् ॥२१४॥
सकृद्यथोक्तश्रवणाद्यथा-
　　सन्नं तथाऽहं प्रवदामि सम्यक् ।

गूढ-स्फुटत्वानवबोधजात-
मूढभ्रमज्ञानविभञ्जनार्थम् ॥ २१५ ॥

इत्थं पूर्वप्रकारेण षड्विध सकृत् फलानयनमुक्तम् । तत् तत् सद्य उपस्थित्यै मयाऽङ्कितं तत्र तत्र । अथ सप्तमं भेदमाह—कर्णानुपातात् दोःफलतो यच्छीघ्रफलज्याऽऽनीयते तत्र चेत्कर्णानुपातो न कार्यस्तदा भुजफलतुल्यैव शीघ्रफलज्याऽमुष्य प्रथमतयाऽऽगता, तच्चापं कृत्वा तेन विलोमसंस्कृतः स्पष्टग्रहो मन्दस्पष्टग्रहः स्यात्तस्योच्चस्यान्तरं शीघ्रकेन्द्रं, ततः कर्णमानं, ततः शीघ्रफलं च साध्यं, तत्पूर्वापेक्षया शुद्ध ततः पुनः केन्द्रादि, ततः पुनः फलम्, एवमसकृत्कर्मणाऽपि तदेव फलमन्ते भवेत् । अयन्तु सप्तमप्रकारः । एवं यथाऽत्र सकृत्प्रकारात् स्वमान्द यत् भुजफल तत् तथा पूर्वोक्तकर्णानुपातनशसिद्धशीघ्रफलासन्नं भवेत्तथाऽहं सम्यक् प्रवदामि, किमर्थं तदाह—गूढं कठिन यत् स्फुटत्व स्पष्टीकरणत्व तस्य अनवबोधात् अज्ञानात् जातं जनित यत् मूढानां भ्रमज्ञानं, तस्य विभञ्जनार्थं ध्वंसार्थम्, इति ।

परं सर्वैकरूपैश्च परिध्यंशैः पुरोदितैः ।
सप्तभेदोद्भवं साध्यं फलं नेदं कथंचन ॥ २१६ ॥
त्रिज्यागुणान् कर्णहृतान् कृत्वा पूर्वोक्तवत् स्फुटान् ।
युग्मौजान्तपरिध्यंशान् ततोऽनुपतनात् स्फुटैः ॥ २१७ ॥
स्वेष्टमध्यपरिध्यंशैः फलं कार्यं विचक्षणैः ।

अत्र पुरोदितैः पूर्वोक्तैरेकरूपैः स्थिरैः परिध्यंशैः सप्तभेदोद्भवं फल साध्यं, परमिदं कथंचन नहि सम्यक्, स्फुटपरिधेरसाधितत्वात् । अतः आदौ पुरोदितानेकरूपान् परिधीन् त्रिज्यागुणान् कर्णहृतान् कृत्वा ततस्तेभ्यः स्फुटयुग्मौजान्तपरिधिभ्यः पूर्वोक्तवत् विचक्षणैः पण्डितैः फलानयनं कार्यम् ॥

युग्मौजान्तपरिध्यंशान् मान्दान् स्पष्टान् वदामि तान् ॥ २१८॥

विंशत्यंशा मनवः सूर्ये, दन्तास्त्र्यंशोनिता विधौ ।
ओजान्तोत्थपरिध्यंशाः प्रोक्ता भौमादथोच्यते ॥ २१९ ॥
ओजे द्व्यंगा,–वसुयमा,–रदौ,–रुद्रौ गजोऽध्ययः ।
द्वितीययुग्मपादान्ते सपञ्चांशेन्द्रभागकाः ॥ २२० ॥
रवे,–रङ्ककलोनेषुवह्न्यंशा हिमदीधितेः ।
सत्र्यंशा युग्मनन्दांशा कुसुते कलयैकया ॥ २२१ ॥
ऊनाः सार्धखरामाश्च बुधे साङ्घ्रिशरागनयः ।
भागा गुरौ च सत्र्यंशा भवांशा भृगुनन्दने ॥ २२२ ॥
त्रिलिप्तोना रसेष्वंशाः शनौ, तुर्यपदान्तजे ।
युग्माह्वयेऽथ सूर्यस्य सपञ्चांशास्त्रयोदश ॥ २२३ ॥
विधोर्नन्दद्विभागाश्च सपञ्चांशाः कुजस्य तु ।
सैकलिप्तैकषष्टिस्तु बुधे वह्निकलान्विताः ॥ २२४ ॥
रसव्यंशा गुरौ भागा लिप्ताश्चांकद्विसंमिताः ।
कवेर्विंशत्यंशरुद्रांशाः विंशत्यंशान्यब्धिभागकाः ॥ २२५ ॥

अत्र समपदान्तीयपरिध्यंशान् विषमपदान्तीयोंश्च स्पष्टान् कर्णानुपातजान् वदामि । सङ्ख्यासंज्ञा तु सरलैव, तत्र तावत् क्रमादोजयुग्मान्तपरिधिदर्शनम् ।

( क्रमादोजयुग्मपरिधिदर्शनम् । )

| सू. | चं. | मं. | बु. | गु. | शु. | श. | मान्दाः परिधयः |
|---|---|---|---|---|---|---|---|
| १३ ४० | ३१ ४० | ७२ | २८ | ३२ | ११ | ४८ | ओजपदान्ते |
| १४ १० | ३४ ५१ | ६२ ७० | ३० २१ | ३४ १५ | ११ २० | ५५ ५० | द्वि.पदान्ते |
| १३ १० | ३१ १२ | ६१ १ | ३६ ३ | ३१ ३१ | १० ४० | ४२ ४० | च.पदान्ते |
| १३ ४० | ३२ १ | १६ ५० | २८ १६ | ३२ ३२ | ११ ० | ४१ १० | मांदाज्ञात्र युग्मान्ते |

अथ परिधिविषये किञ्चिद्वक्तव्यशेषमाह ।

**शनैः श्रीरविणा स्वल्पान्तराल्लाघवतश्च ते ।**
**द्वितीयतुर्ययोगार्धे गृहीताः परिधेर्लवाः ॥ २२६ ॥**

स्पष्टम् ।

अथान्यद्वैचित्र्यमाह—

**नाशङ्कनीयं न चले किमित्थं फलवासना ।**
**विचित्राऽस्ति यतस्तत्र गोलस्थितिविभेदतः ॥ २२७ ॥**

यथा मान्दकर्मणि कर्णानुपातेन स्पष्टान् कृत्वा परिधयः पठिताः तेभ्यो जनितमेव मान्दभुजफलं सम्यगित्य चले शीघ्रकर्मण्यपि किं न कृतमिति न आशङ्कनीयम्, यतस्तत्र गोलस्थितिविभेदतः, अर्थात् यथा मान्दकर्मणि गोलस्थितिः, तथा चलकर्मणि नेत्यतः फलसाधनोपपत्तिर्विचित्रा नैकरूपाऽस्तीति महाशयः ।

**यथासन्नं युग्मपदं तद्ग्राह्यं विबुधैरिह ।**
**अयुग्मं त्वेकमेवोक्तं परिधिज्ञानहेतवे ॥ २२८ ॥**

युग्मपदान्तयोरुभयोश्चलयोर्भिन्नभिन्नकर्णत्वात् भिन्नभिन्नकेन्द्रत्वाच्च नैकविधमिति स्पष्टम्, विषमपदान्तयोस्तु तुल्यकर्णत्वादेकविधदेशस्थानत्वाच्च परिधीनामेकविधस्थित्या एकविधमेव परिधिमानमुक्तमिति स्पष्टम् ।

तत्रेष्टस्थले वक्ष्यमाणपरिध्यन्तरसंस्कारे कर्तव्ये समीपगत युग्मपदान्तमङ्गमनुपाते सूक्ष्मान्तरार्थमिति ।

**ओजयुग्मान्तरगुणा भुजज्या त्रिज्ययोद्धृता ।**
**युग्मवृत्ते धनर्णं स्यादोजादूनाधिके स्फुटः ॥ २२९ ॥**

युग्मौजपदान्तयो राशित्रयान्तरित्वात् त्रिज्यातुल्यभुजज्यया यदि विषमसमपदान्तपरिध्यन्तरं लभ्यते तदेष्टकेन्द्रज्यया किमितीष्टस्थलीयान्तरमनेनासन्नयुग्मवृत्ते विषमपदान्तादूने धनं, विषमपदान्तादधिके ऋणं कार्यं तदा इष्टस्थले स्पष्टः परिधिः स्यादिति स्पष्टम् ।

**कर्णानुपातजस्पष्टाः परिध्यंशाः पुरा कृताः ।**
**यथा सूक्ष्मफलार्थं वै तद्वदत्रापि चाहृताः ॥ २३० ॥**

पुरा कृता सूर्यसिद्धान्तोक्ताः परिध्यंशाः कर्णानुपातेन जा जायमाना अतएव स्पष्टाः सन्ति, यथाऽत्रापि मया सूक्ष्मफलार्थं चाहृता इति ।

**सर्वैः प्रकारैः फलमेकमेव**
**पूर्वोक्तभङ्ग्यैव यथा सुसूक्ष्मम् ।**
**सिद्धं भवेत् तन्मयका निबद्धं**
**ज्योतिर्विदां संशयभञ्जनार्थम् ॥ २३१ ॥**

पूर्वोक्तभङ्ग्या प्राचीनोक्तस्वोपपत्तिविरचनया सुसूक्ष्मविचारानुसृत कर्णानुपातवशजनितमिदं यथ, एवं सर्वैः प्रकारैः प्राचीनैर्नवीनैर्धियैकमेव यथा सिद्धं भवेत् तथा ज्योतिर्विदां भ्रमभङ्गार्थं, मयका मया निबद्धम्, अर्था-न्मया सूर्यमतस्य, तथा यथार्थफलानयनपद्धतेरपि एष एव पन्था दर्शित इति भावः ।

**युग्मान्तजाद्योजपदान्तजातै-**
**र्मध्येऽनुपातात् परिधेः स्फुटत्वम् ।**
**फलोपपत्त्या विदितं मयाऽस्ति**
**जानन्ति नेत्थं जडबुद्धयस्तु ॥ २३२ ॥**

उक्ताद्द्विसंवादतया स च्चायं
प्रायो बुधैरज्ञपरंपरास्थैः ।
प्राङ् नाशितः सम्प्रति सप्रमाणं
विज्ञैः स्वभक्त्या नितरां गृहीतः ॥ २३४ ॥
आर्योदितां च ग्रहगोलसंस्थां
ज्ञात्वैव रङ्गाशयपाठ उक्तः ।
स्थित्यन्यथात्वेऽनुगतः प्रसिद्धः
स एव युक्तो मम नाग्रहोऽत्र ॥ २३५ ॥

श्रीरङ्गेण यथार्थं सूर्यसिद्धान्ते यदेव कथितं, तदेवेत्थं मया कमलाकरेण परिधे स्फुटत्वमुक्तम्, परन्तु तत्र सूर्यसिद्धान्ते युग्मपदान्तपाठ सदृश्यते, स च पाठ उक्ताद्द्विसंवादतया पूर्वापरसंदर्भविरुद्धतया प्रायो बाहुल्येन अज्ञपरम्परास्थै रङ्गनाथादिभि प्राक् पूर्वं नाशित, सम्प्रति विज्ञैरस्मादृशै सप्रमाणं नितरां स्वभक्त्या परश्रद्धया स च पाठो गृहीत । अहो कथं भवता भक्त्यैव गृहीत ? इत्यत आह—आर्योदितां रङ्गुदितां ग्रहगोलसंस्थां ज्ञात्वा एव तद्वेधानुकूलस्तदाशयपाठ उक्त, स्थित्यन्यथात्वे भिन्नस्थितो तु स एवानुगत प्रसिद्ध पाठो युक्तः, अत्राग्रहो मम नेवास्ति ।

यद्राङ्फलेऽत्र श्रवणानुपाते
कृतेऽपि सौरे परिधेः स्फुटत्वम् ।
तद्वासनाचिह्नवान् स एव
नारायणो मण्डलगो,— न चान्यः ॥ २३६ ॥
वस्तुतस्तु नहि सौरमतस्य
कल्पनां प्रभवामवगन्तुम् ।
अन्यथास्थितिवशादपिवर्योऽ-*
पि क्षमोऽत्र जडबुद्धिनरः कः ? ॥ २३७ ॥

* वर्गोऽपि वा पाठ ।

मान्दफले तु कर्णानुपातं कृत्वा स्फुटा परिधयः पठिताः । शीघ्र-फले शीघ्रफलेऽत्र श्रवणानुपाते कृतेऽपि पुनः परिधेः स्फुटत्वमुक्तम् । अत्र पूर्वं भट्टेन समाधानं दत्तं यत् कर्णानुपातेन परिधयः स्फुटाः कृताः शैघ्र्ये मान्दे च, परन्तु सूर्यसिद्धान्ते शीघ्रकर्मणि कर्णानुपातः पश्चादपि क्रियते, तत्र चेत्पूर्वं कर्णानुपातः कृतस्तदा पश्चात्पुनः कथं क्रियते, इति स्वमनसि विचिन्त्यान्ते भट्टोऽप्रतिभो भूत्वा वदति, अहो ! ततस्य फलस्य वासनाविद्रूपपरिज्ञो रविमण्डलगो भगवान् सूर्य एव, तदन्यः कोऽपि न तज्ज्ञाता विद्यते, अतो मम न कोऽपि विशेषो दोष इति, शेषं स्पष्टम् ॥

अतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि ।
"श्रुतिर्यत्र प्रमाणं स्यात्युक्तिः का तत्र नारद ॥२३८॥
जिज्ञासोर्युक्तिरिष्टाऽस्ति यदि श्रुत्यनुसारिणी ।"
इत्थं शाकल्य एवाह ब्रह्मोक्तस्यनिबन्धने ॥ २३९ ॥

अतीन्द्रिया इन्द्रियज्ञानातिक्रान्ता येऽर्थास्तेषां विज्ञाने श्रुतिरेव वेद एव हि प्रमाणम्, यद्वेदे चोक्तं तदेव सत्यमिति भावः । अतो यत्र तु श्रुतिः प्रमाणं, तत्र हे नारद ! का युक्तिरुपपत्तिः का ? न काऽपि युक्तिर्युक्ता । तथाऽपि जिज्ञासोर्ज्ञातुमिच्छोर्यदि युक्तिरिष्टा तदा श्रुत्यनुसारिणी श्रुत्यनुकूला एव युक्तिर्मान्या अन्यथा भ्रान्तिरेव स्यात् । इत्थं ब्रह्मसिद्धान्ते शाकल्यो मुनिराह, शेषं सुगमम् ।

इत्थं कृतैस्तैः परिधिस्फुटाङ्गैः
यथोक्तवद्दोःफलचापमेव ।
फलं च कर्णोद्भवकं सहृत्या-
ज्ज्योतिर्विदां मन्दवदाहरेऽन्यम् ॥ २४० ॥

फलं स्यात् । अत्र मद्गमनसि न कोऽपि निश्चयः फलसाधने जातः, सर्वं संशयग्रस्तमेवेति ।

अथ स्वयं भ्रान्तोऽपि भास्कराचार्यमधिक्षिपति—

**आर्योक्तगूढस्फुटतामबुद्ध्वा मान्ददोःफलम् ।**

**सकृदेवोदितं स्वोक्तौ भास्कराद्यैर्न सच्च तत् ॥२४१॥**

भास्कराद्यैर्भास्करमुनीश्वरप्रभृतिभिः, आर्योक्ता या गूढा दुर्ज्ञेया स्फुटता तामबुद्ध्वा स्वोक्तौ स्वस्वसिद्धान्ते सकृदेव फलमुक्तं तत् सत् नहि, अर्थात् "चापं वृथा मन्दफलं वदन्तीति" न युक्तियुक्तम् । अहो धन्योऽयं भट्टः, यतोऽयं सूर्यसिद्धान्तस्यापि मनेन मान्दभुजफलचापस्यैव मान्दफलकथनं दृष्ट्वा तत्र कर्णानुपातेन परिधयः स्पष्टीकृता इत्युक्त, भास्करमतदर्शनावसरे तु दोषः प्रदर्शित इति ।

तुलाक्रियादिगते च केन्द्रे
फलं धनर्णं क्रमशश्च वेद्यम् ।
सुसंस्कृतो मन्दफलेन मध्यो—
मन्दस्फुटः स्यादथ वा स्फुटाख्यः ॥ २४२ ॥
कर्णानुपातप्रभवा स्वमान्द-
केन्द्रस्य दोर्ज्या विहिताऽस्ति पूर्वम् ।
तच्चापमुखेन युतं हि मन्द-
स्फुटोऽथवेत्थं रविचन्द्रयोस्तु ॥ २४३ ॥
परन्तु तच्चापमिहाद्यपादे,
चापं तथा द्व्यादिपदक्रमेण ।
विहीनितं चक्रदलात्, तदेव
चक्रार्धयुक्तं, वियुतं तु चक्रात् ॥ २४४ ॥
मृदुस्फुटावेव सदाऽर्कचन्द्रा-
वेवं स्फुटौ स्तश्च तयोरभावात् ।
शीघ्रोच्चकस्या-थ कुजादिकानां
स्फुटक्रियां वच्मि मृदुद्रुताभ्याम् ॥ २४५ ॥

ग्रहोच्चान्तरस्य केन्द्रसंज्ञकत्वात् उच्चसमे ग्रहे केन्द्राभावः, अतस्तत एव केन्द्रस्य राश्यादिप्रवृत्तिः कल्पिता तेनोच्चादितो मेषादिगणनोचिताऽर्थात् उच्चाद्धपट्कं मेषादि केन्द्रम् । नीचाद्धपट्कं तुलादिकेन्द्रम् ।

अथात्र क्षेत्रं द्रष्टव्यम्, तत्र प्रथमपदे $\because$ $\text{मउ} > \text{उप}$

$\therefore$ $\text{उम} - \text{मप} = \text{स्पउ} = \text{स्पम}$ ।

द्वितीयपदे तु —

$\because$ $\text{उमप} < \text{उमम}$, $\therefore$ स्पष्टग्रहादग्रे मध्यमग्रहस्तेनात्रापि $\text{मग्र} - \text{मफ} = \text{स्पम}$ ।

अतो मेषादौ केन्द्रे फलमृणम् ।

अथ तृतीयपदे 'मं' मध्यमग्रहात् 'स्पं' स्पष्टग्रहोऽग्रेऽत $\text{मम} + \text{फ} = \text{स्पम}$, अथैव चतुर्थपदे 'म' मध्यमग्रहात् 'प' स्पष्टग्रहोऽग्रे वर्त्ततेऽत $\text{मम} + \text{फ} = \text{स्पम}$ ।

अतस्तुलादौ धनमित्युक्त युक्तियुक्तमिति । अथ मन्दफलेन संस्कृतो मध्यग्रहो मन्दस्पष्टग्रहः, तथा शीघ्रफलेन संस्कृतो मन्दस्पष्टग्रहः स्पष्टग्रहः स्यादिति सर्वेषामतिरोहितमेव । अथवा, यदि 'म' बिन्दौ मध्यमग्रहस्तदा 'प' बिन्दौ मन्दस्पष्टग्रहः, इति युक्त्या स्पष्टमेवात $\text{भूम} \; \text{मक} :: \text{भूप} : \text{पल}$ अर्थात् $\frac{\text{मक}}{\text{भूम}} = \frac{\text{पल}}{\text{भूप}}$ $\therefore$ $\text{पल} \dagger = \frac{\text{मक} \times \text{पभू}}{\text{भूम}}$, अथास्याचापम् $= \text{पउ}$, तदुच्चे युतं तदा 'प' मन्दस्पष्टग्रहराश्यादि स्यादिति किं चित्रम् । परमेवं रविचन्द्रयोरेव केवलमेकमेव मान्दं फलं, कुजादीनां शीघ्रफलमपि, भवति, रविचन्द्रौ मन्दस्पष्टावेव स्पष्टौ भवतः । यथोक्तं भास्करेण "स्फुटौ रवीन्दू मृदुनैव वेद्यौ शीघ्रोऽयत्तुङ्गस्य तयोरभावात् ।" इति । तत्र 'पउ' चापस्य पदभेदेन भिन्नसंस्थानत्वं भुजकरणवासनावत् स्पष्टम् ।

† अत्र क्षेत्र तन्निर्माणा 'ल' वर्णो भवित । स च स्पष्टक्रदक्षमापूर्वे लाय इति ।

अथ फलद्वयसंस्कारविधिः कुजादिग्रहे कथं तदाह—

स्वमन्दफलसंस्कारान्मध्यमः स्यान्मृदुस्फुटः।
स्वशीघ्रफलसंस्कारात् स्यात्सकृत् स स्फुटग्रहः॥२४६॥
मध्ये शीघ्रफलस्यार्धं मान्दमर्धफलं तथा।
मध्यग्रहे मान्दफलं सकलं शीघ्रमेव च ॥ २४७ ॥
इत्थं सौरकमप्रामाण्यतः स्पष्टक्रियोदिता।
तत्फलद्वयमेवाहुः पूर्णमार्षविरोधिनः ॥ २४८ ॥

अत्र मन्दफलेन संस्कृतो मध्यमग्रहो मन्दस्पष्टग्रहो भवति। तथा शीघ्रफलसंस्कृतो मन्दस्पष्टग्रहः स्पष्टग्रह इति साधारण्येनोक्तम्। परन्तु मान्दफलं वास्तवं केवलमध्यमग्रहान्नायाति, येन संस्कृतो गणितागतो-मध्यमग्रहो मन्दस्पष्टो भवेत्तेनान्यथोपायोऽतीन्द्रियैः कृतः, स च यथा—

आदौ गणितागतमध्यमग्रहाच्छीघ्रफलमुक्तवत्प्रसाध्य, तदर्धसंस्कारं गणितागतमध्यमग्रहे कृत्वा, ततः शीघ्रफलार्धसंस्कृतगणितागतमध्यम-ग्रहान्मान्दफलं प्रसाध्य, तदर्धेन संस्कृतः शीघ्रफलार्धसंस्कृतगणितागत-मध्यग्रहो यादृशो जातस्ततः पुनर्मान्दफलमानीय तेन गणितागतपूर्व-मध्यग्रहः संस्कार्यस्तदा वास्तवो मन्दस्पष्टग्रहस्ततः पुनः शीघ्रफलं साध्यं, तेन सकलेनाधुना साधितो मन्दस्पष्टः संस्कृतस्तदा स्पष्टग्रहो भवति। अत्र वास्तवफलानयनायैव ग्रहे फलार्धसंस्कारो दत्तः पूर्वैः। ये केवलं मध्यमग्रहादागतमन्दफलमेव मध्यमग्रहे संस्कृत्य, ततः शीघ्रफलं प्रसाध्य स्पष्टग्रहं साधयन्ति, ते चार्षविरोधिनः सन्तीति। वस्तुतः स्पष्टीकरणे केषामपि मनः शुद्धिर्न जाता, सर्वे स्वस्वागमानुसारं लिलिखुः।

अत्रापि चेन्मान्दवदन्त्यशीघ्र-
केन्द्रस्य दोर्ज्या क्रियते स्फुटाऽस्याः।
चापं तु यत् स्वीयपदाङ्कवं त-
मलोच्चयुक् स्फुटखेचरो वा ॥ २४९ ॥

